THE

HARIDAS SANSKRIT SERIES

95

# RASÂYANAKHANDA

FOURTH PART OF

**RASARATNĀKARA**

OF

S'RĪ NITYA NĀTHA SIDDHA

EDITED BY

VAIDYA JÂDAVJÎ TRICUMJÎ ÂCHÂRYA,

श्रीनित्यनाथसिद्धविरचितः

( रसरत्नाकरान्तर्गतश्चतुर्थः )

# रसायनखण्डः ।

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा

संशोधितः ।

तस्येदं प्रथमं संस्करणम्

पणशीकरोपाह्वरामचन्द्रशास्त्रिणा सुसंस्कृतम् ।

प्रकाशकः—

चौखम्बा संस्कृत पुस्तकालय,

बनारस ।

वि. सं. १९९६ ] [ 1939

*Printed by*

**JAYA KRISHNA DAS GUPTA,**

**Vidya Vilas Press, Benares City.**

1939.

# निवेदनम्।

श्रीनित्यनाथसिद्धविरचितो रसरत्नाकरः रसखण्ड–रसेन्द्रखण्ड—वादिखण्ड—रसायनखण्ड—मन्त्रखण्डाख्यैः पञ्चभिः खण्डैर्विभक्तः। यदुक्तं स्वेनैव ग्रन्थारम्भे,–"पञ्चखण्डमिदं शास्त्रं साधकानां हितं प्रियम्। रसखण्डे तु वैद्यानां व्याधितानां रसेन्द्रके ॥ वादिनां वादखण्डे च वृद्धानां च रसायने। मन्त्रिणां मन्त्रखण्डे च रससिद्धिः प्रजायते"–इति। तेष्वेतावत्पर्यन्तं रसखण्डो रसेन्द्रखण्डश्चेति खण्डद्वयं कलकत्तानगरे मुम्बय्यां च मुद्रितं वर्तते। वादिखण्डः, रसायनखण्डो मन्त्रखण्डश्चेति खण्डत्रयं त्वमुद्रितमेवास्ते। अमुद्रितेषु खण्डेष्वयं रसायनखण्डो वैद्यानां चिकित्सायामुपयुक्त इति ज्ञात्वा स एव प्रथमं प्रकाश्यते। अवशिष्टं खण्डद्वयमपि यथावसरं प्रसेत्स्यत्येवास्यां ग्रन्थमालायाम्। अस्मिन् खण्डे रसायनतन्त्रं वाजीकरणतन्त्रं चेति तन्त्रद्वयं प्रतिपादितं दृश्यते। दृश्यन्ते चात्र बहवो नूतनयोगा अपि। यथा–अत्रोक्तो वालुकामीनप्रयोगः 'समक उल सेदा–रेगमाही' इति नाम्ना यवन(युनानी)वैद्येषु चिरकालात् प्रसिद्धोऽपि भारतीयवैद्यकग्रन्थे नवीन एव*। यद्यप्यस्मिन् ग्रन्थे रसायनवाजीकरणयोगानां गुणकथनावसरे 'आयुः स्याद्ब्रह्मणो दिनं' 'रमयेत्कामिनीशतं' इत्यादिरूपा अतिशयोक्तिर्वर्तते, सा चार्थवादरूपैव; तथाऽप्येषां प्रयोगाणामायुष्यत्वं वाजीकरत्वं च मन्तव्यमेव। श्रीनित्यनाथसिद्धः कं देशं जन्मनाऽलञ्चकारेति निर्णेतुं च किञ्चिदपि साधनमुपलभ्यते। स चायं श्रीनित्यनाथसिद्धः खिस्तीयद्वादशशताब्दयां बभूवेत्यनुमीयते, रसवाग्भटकृतरसरत्नसमुच्चये तन्नामोल्लेखात्। रसरत्नसमुच्चयकर्ता वाग्भटस्तु खिस्तीयत्रयोदशशताब्दयां बभूवेतीतिहासविदां †मतम्। ग्रन्थस्यास्य शुद्ध्यर्थं आदर्शपुस्तकद्वयमुपलब्धं, एकं मुम्बईनिवासिनां मदीयसुहृदां **'वैद्य दामोदर विठ्ठल दमणकर'** इत्येतेषां, द्वितीयं च वटोदरनिवासिनां मदीयसुहृदां **'अमृत विनायक जाम्बेकर'** इत्येतेषाम्। संशोधनावसरे तयोराद्यस्य क. इति द्वितीयस्य च ख. इति संज्ञा स्थापिताऽस्ति। ग्रन्थस्यास्य संशोधने यथामति कृतेऽपि यत्ने भ्रमप्रमादिवशाज्जातं स्खलनं क्वाप्युपलभ्येत चेत्सुधीभिः संशोधनीयं संवेदनीयश्चाहमिति

**यादवशर्मणः।**

---

* अत एवानुमीयते यन्नित्यनाथसिद्धो भारतवर्षे यवनराज्यस्थापनानन्तरं बभूवेति। भारतवर्षे यवनराज्यस्थापनाकालस्तु खीस्तीये ११९४ वर्षे।

† See History of Hindoo Chemistry Vol. I. Introduction Page 89. & Vol. II. Pages 222-23,

# रसायनखण्डान्तर्गतविषयानुक्रमणिका ।

॥ श्रीः ॥

# श्रीनित्यनाथसिद्धविरचितरसरत्नाकरस्य चतुर्थो

# रसायनखण्डः ।

---

## प्रथमोपदेशः ।

### मङ्गलाचरणम् ।

जयति स रसराजो मृत्युशङ्कापहारी
सकलगुणनिधानं कायकल्पाधिकारी ।
वलिपलितविनाशं सेवितो वीर्यवृद्धिं
स्थिरमपि कुरुते यः कामिनीनां प्रसङ्गम् ॥ १ ॥

### देहसिद्धेः प्रशंसा ।

अथातः संप्रवक्ष्यामि देहसिद्धिं सुशोभनाम् ।
यस्याः सिद्धौ मनुष्याणां जायन्ते सर्वसिद्धयः ॥ २ ॥
न देहेन विना किञ्चिदिष्टमस्ति जगत्त्रये ।
तस्मात्सर्वप्रयत्नेन त[1]स्मिन् यत्नो विधीयताम् ॥ ३ ॥

### रसायनसेवनस्य पूर्वकर्म ।

शुभनक्षत्रदिवसे वमने रेचने कृते ।
ततो विशेषशुद्ध्यर्थं केतकीस्तनजं द्रवम् ॥ ४ ॥

---

१ 'तस्याः' ख. ।

त्रिदिनं कुडवैकैकं लोणदोषहरं पिबेत् ।
विडङ्गं च वचा कुष्ठं केतकीस्तनसंयुतम् ॥ ५ ॥
क्वथितं त्रिदिनं पीतमम्लदोषहरं परम् ।
श्यामावह्निविडङ्गानि त्र्यूषणं त्रिफला वृषः ॥ ६ ॥
सैन्धवं देवदारुश्च मुस्ता चैतत्समं समम् ।
घृतैर्लेह्यं तु कर्षैकं सप्ताहात्सर्वदोषजित् ॥ ७ ॥
एवं विशुद्धदेहस्तु पूजयेद्देवतां गुरुम् ।
कुमारीं योगिनीचक्रं ततः कुर्याद्रसायनम् ॥ ८ ॥

रससेवने पथ्यानि ।

निर्वाते भूगृहे वाऽथ बाह्यचिन्ताविवर्जितः ।
जितेन्द्रियो जितक्रोधः क्षीरशाल्यन्नभुग्भवेत् ॥ ९ ॥
षष्ट्योदनं यवान्नं च गोधूमं मुद्गयूषकम् ।
जाङ्गलं भक्षयेन्मांसं केवलं क्षीरमेव वा ॥ १० ॥
बलान्नं वाऽथ भुञ्जीत शाकलोणविवर्जितम् ।
अभ्यङ्गं मस्तुना कुर्यात् स्नानं चैव सुखाम्बुना ॥ ११ ॥
काकिनीं स्त्रीं भजेन्नित्यं स्वानुकूलां सुयौवनाम् ।
रसेन्द्रे भक्ष्यमाणे तु कामान्धो जायते नरः ॥ १२ ॥
मैथुनेन विना तस्य ह्यजीर्णो जायते रसः ।
अजीर्णे कम्पदाहार्ती हिक्का मूर्छा ज्वरोऽरतिः ॥ १३ ॥
कासश्वासारुचिच्छर्दिभ्रममोहा भवन्ति हि ।
सेवेत सुभगां तस्माद्दुर्भगां परिवर्जयेत् ॥ १४ ॥

रसायने वर्ज्यानि ।

अभ्यङ्गं कटुतैलेन काञ्जिकं मदिरां दधि ।

---

१ लवणभक्षणजनितदोषहरमित्यर्थः । २ 'देवताचक्रं' ख. ।
३ 'यस्यास्तु कुञ्चिताः केशाः श्यामा या पद्मलोचना । सुरूपा तरुण भिन्नविस्तीर्णजघनस्थला ॥ सङ्कीर्णहृदया पीनस्तनभारेण नामिता । चुम्ब नालिङ्गनस्पर्शकोमला मृदुभाषिणी ॥ अश्वत्थपत्रसदृशयोनिर्देशसुशोभि ता । कृष्णपक्षे पुष्पवती सा नारी काकिनी स्मृता ॥ रसबन्धे प्रयोगे च उत्त मा सा रसायने' र. र. स. अ. ६ ॥ ४ 'दाहादि' ख. ।



कलिङ्गकारवल्ल्यम्लतैलकूष्माण्डराजिकाः ॥ १५ ॥
बिल्वच्छत्राकवार्ताकविदलं काकमाचिकाम् ।
मूलकं लशुनं तीक्ष्णं शीतमुष्णं च वर्जयेत् ॥ १६ ॥
रात्रौ जागरणं त्याज्यं दिवास्वापं च मैथुनम् ।
कलहोद्वेगचिन्ताश्च शोकं चैव विवर्जयेत् ॥ १७ ॥

रसायनव्यापचिकित्सा ।

आवर्जनाद्भवेच्छूलं निद्राऽऽलस्यं ज्वरोऽरतिः ।
त्र्यहं पिबेत्तत्प्रशान्त्यै वारिणा कर्कटीफलम् ॥ १८ ॥
शुण्ठीसैन्धवचूर्णं वा मातुलुङ्गाम्लकैर्लिहेत् ।
सौवर्चलं गवां मूत्रैः पिबेद्वा तत्प्रशान्तये ॥ १९ ॥
वन्ध्याकर्कोटकीं पुङ्खां पातालगरुडीं जलैः ।
क्वाथयेदष्टगुणितैस्तदष्टांशं ससैन्धवम् ॥ २० ॥
पिबेत्सर्वविकारघ्नं त्रिदिनं शिवभाषितम् ।
मूलं वा कारवल्ल्युत्थं सैन्धवं वा गवां जलैः ॥ २१ ॥
त्रिदिनं कर्षमात्रं तु पिबेत्सर्वविकारजित् ।
अपथ्यशीलिनामेतत् कथितं रससेविनाम् ॥ २२ ॥
अमुमेव विधिं कुर्याद्रसायनविधौ किल ।
अमृतं विधिसंयुक्तं विधिहीनं तु तद्विषम् ॥ २३ ॥

रससङ्क्रामणम् ।

चातुर्जातककर्पूरकङ्कोलं कटुकीफलम् ।
खादेत्ताम्बूलसंयुक्तं रससङ्क्रामणे हितम् ॥ २४ ॥

पारदमरणविधिः ।

अथात्र वक्ष्यते सम्यगादौ पारदमारणम् ।
समुखस्य रसेन्द्रस्य वासनामुखितस्य वा ॥ २५ ॥
क्रमेण जारयेत्स्वर्णं समांशं पूर्ववत्ततः ।
तत्तुल्यं गन्धकं तस्मिन् दत्वा दिव्यौषधिद्रवैः ॥ २६ ॥

---

१ 'मातुलुङ्गार्द्रकैर्लिहेत्' ख. । २ पुङ्खामिति शरपुङ्खामित्यर्थः ।
३ 'स्तत्पादांशेन सैन्धवम्' ख, ।

मर्दयेत्रिदिनं खल्वे मूषायां चान्धितं ततः ।
करीषाग्नौ दिवारात्रं त्रिरात्रं वा तुषाग्निना ॥ २७ ॥
स्वेदितं मर्दयेद्भूयो बीजैर्दिव्यौषधोद्भवैः[1] ।
तुल्यं खल्वे चतुर्यामं वज्रमूषान्धितं धमेत् ॥ २८ ॥
भस्मसूतं भवेत्तद्वै योज्यं सर्वरसायने ।

पारदमारणस्य द्वितीयः प्रकारः ।

शुद्धसूतं[2] समं स्वर्णं याममम्लैर्विमर्दयेत् ॥ २९ ॥
प्राक्षाल्य ग्राहयेत् पिष्टीं पिष्ट्यर्धं शुद्धगन्धकम् ।
गन्धार्धं टङ्कणं दत्त्वा सर्वतुल्यां हरिद्रिकाम् ॥ ३० ॥
स्त्रीपुष्पेण तु तत्सर्वं मर्द्यं रम्भाद्रवान्वितम् ।
दिनान्ते गोलकं कृत्वा वालुकायन्त्रगं[3] पचेत् ॥ ३१ ॥
दिनं मन्दाग्निना तं वै समुद्धृत्य विचूर्णयेत् ।
चूर्णांशं गन्धकं दत्त्वा गर्भयन्त्रे त्र्यहं पचेत् ॥ ३२ ॥
तुषाग्निना लघुत्वेन जायते भस्मसूतकः ।

पारदमारणस्य तृतीयः प्रकारः ।

शुद्धसूतस्त्रिभागः[4] स्याद्भागैकं ताम्रचूर्णकम् ॥ ३३ ॥
दिनैकं मर्दयेदम्लैः क्षालितं पिष्टिमाहरेत् ।
माक्षिकाद्धौतसत्त्वं च पिष्टितुल्यं प्रकल्पयेत् ॥ ३४ ॥
तत्सर्वं त्रिदिनं मर्द्यं चक्रमर्ददलद्रवैः ।
तद्गोलं गर्भयन्त्रस्थं त्रिदिनं तुषवह्निना ॥ ३५ ॥
करीषाग्नौ[5] दिवारात्रं पचेद्वा भस्मतां व्रजेत् ।

पारदमारणस्य चतुर्थः प्रकारः ।

शुद्धसूतं व्योमसत्त्वं सुवर्णं च समं समम् ॥ ३६ ॥
सर्वतुल्यं बिडं दत्त्वा मर्द्यं रम्भाद्रवैर्दिनम् ।
बीजैर्दिव्यौषधीनां च तुल्यैर्मर्द्यं दिनद्वयम् ॥ ३७ ॥
गर्भयन्त्रगतं पच्यान्म्रियते पूर्ववत्पुटे ।

---

१ '-दिव्यौषधिद्रवैः' ख. । २ 'सूतभस्म' ख. । ३ 'गड्डुकायन्त्रगं' क. ।
४ 'शुद्धसूतं त्रिधा गन्धं भागैकं' ख. । ५ 'पचेदग्नौ' ख. ।



गर्भयन्त्रलक्षणम् ।

चतुरङ्गुलदीर्घं स्याद्विस्तारे चाङ्गुलत्रयम् ॥ ३८ ॥
मृण्मयं सम्पुटं कृत्वा छायाशुष्कं च कारयेत् ।
लवणं विंशभागं स्याद्भागमेकं तु गुग्गुलुम् ॥ ३९ ॥
सर्वं तोयैः प्रपिष्याथ तेनैव सम्पुटोदरम् ।
लिप्त्वा तत्र रसं रुन्ध्याद्गर्भयन्त्रमिदं भवेत् ॥ ४० ॥

पारदमारणस्य पञ्चमः प्रकारः ।

विमला पारदं शुद्धं तुल्यं निर्गुण्डिकाद्रवैः ।
मर्दयेत्रिदिनं तं वै काचकूप्यां निवेशयेत् ॥ ४१ ॥
काचकूप्या ह्यभावे तु निरुन्ध्याच्छ्रावसम्पुटे ।
पाचयेद्वालुकायन्त्रे चतुर्यामान्मृतो भवेत् ॥ ४२ ॥

पारदमारणस्य षष्ठः प्रकारः ।

माक्षिकाद्धौतसत्त्वं तु तत्समं शुद्धगन्धकम् ।
द्वाभ्यां तुल्यं शुद्धरसं दिनं निर्गुण्डिकाद्रवैः ॥ ४३ ॥
तत्सर्वं मर्दितं गोलं वज्रमूषान्धितं पचेत् ।
दिनैकं वालुकायन्त्रे मृतं स्याद्रक्तवर्णकम् ॥ ४४ ॥

पारदमारणस्य सप्तमः प्रकारः ।

उर्ध्वाधो गन्धकं तुल्यं दातव्यं शुद्धपारदे ।
उदरे पक्वमूषायाः काकमाचीद्रवं पुनः ॥ ४५ ॥
द्वाभ्यां चतुर्गुणं दत्त्वा तामाच्छाद्य पचेच्छनैः ।
क्रमाग्नौ वालुकायन्त्रे चतुर्यामान्मृतो भवेत् ॥ ४६ ॥

पारदमारणस्याष्टमः प्रकारः ।

स्नुह्या वा हेमवल्ल्या वा क्षीरैः शुद्धरसं दिनम् ।
मर्दयेद्गन्धकं तुल्यं गर्भयन्त्रगतं पुटेत् ॥ ४७ ॥
पूर्ववत्क्रमयोगेन मृतं योगेषु योजयेत् ।

पारदमारणस्य नवमः प्रकारः ।

शुद्धसूतसमं गुञ्जालाक्षोर्णामधुटङ्कणम् ॥ ४८ ॥
तत्सर्वं भृङ्गजैर्द्रवैर्दिनमेकं विमर्दयेत् ।
वज्रमूषान्धितं ध्मातं म्रियते शशिसन्निभम् ॥ ४९ ॥

पारदमारणस्य दशमः प्रकारः ।

द्रवैस्तु कीटमारिण्या ह्यजमोदाद्रवैश्च वा ।
अहिमार्या द्रवैर्वाऽथ किंवा श्वेताङ्कुलद्रवैः ॥ ५० ॥
मर्दयेत्पारदं शुद्धं समगन्धं दिनत्रयम् ।
सम्पुटे मृण्मये रुद्ध्वा करीषाग्नौ दिवानिशि ॥ ५१ ॥
पचेत्तुषाग्निना वाऽथ त्रिदिनान्म्रियते ध्रुवम् ।

पारदमारणस्यैकादशः प्रकारः ।

शुद्धसूतं मृतं वज्रं समांशं तप्तखल्वके ॥ ५२ ॥
हंसपाद्या द्रवैर्मर्द्यं त्रिदिनान्ते समुद्धरेत् ।
बीजैर्दिव्यौषधीनां च वज्रमूषां प्रलेपयेत् ॥ ५३ ॥
तत्र पूर्वरसं रुद्ध्वा त्रिदिनं तुषवह्निना ।
पाचयित्वा समुद्धृत्य तत्समं शुद्धपारदम् ॥ ५४ ॥
एकीकृत्य त्र्यहं मर्द्यं हंसपाद्या द्रवैर्दृढम् ।
तद्गोलं पूर्ववत्पच्यान्मृतं भवति शोभनम् ॥ ५५ ॥

वज्रादिमारणविधेरतिदेशेन कथनम् ।

वज्राभ्राद्यष्टलोहानां रसखण्डे यथोदितम् ।
मारणं वादिखण्डे[1] वा तथा ज्ञेयं[2] रसायने ॥ ५६ ॥

मृतरसगुणाः ।

एवं मृतो रसवरः परमामृतः स्या-
त्तत्सेवकाः सततमस्त्र देहं तु तेषाम् ।
देहं करोति सहसा सुरसुन्दरीणां
क्रीडाक्षमं परमसुन्दरमेव नित्यम् ॥ ५७ ॥

इति श्रीपार्वतीपुत्रनित्यनाथसिद्धविरचिते रसरत्नाकरे रसायनखण्डे रसमारणं नाम प्रथमोपदेशः ॥

---

१ 'वादखण्डे' ख. । २ 'पदं' ख. ।



## द्वितीयोपदेशः ।

धर्मज्ञैः शिववत्सलैर्निजरतैर्भूपैर्महासाधकैः
सम्यग्दिव्यरसायनेन सततं कल्पान्तसीमावधि ।
रक्ष्यं गात्रमनन्तपुण्यनिचये[1] मुक्तिश्च यस्माद्भवे-
त्तद्वक्ष्ये परमाद्भुतं सुखकरं साम्राज्यदं धीमताम्[2] ॥१॥

क्षेत्रीकरणार्थमभ्रकभक्षणविधिः ।

अभ्रकं भक्षयेदादौ मारितं चामृतीकृतम् ।
मासैकं निष्कनिष्कं वै क्षेत्रीकरणहेतवे ॥ २ ॥
यस्मादभ्रं रसक्षेत्रं ततः कुर्याद्रसायनम् ।
अक्षेत्रीकरणे सूतो ह्यमृतो विषतां व्रजेत् ॥ ३ ॥
फलसिद्धिः कुतस्तस्य सुबीजस्योषरे यथा ।

वज्रपञ्जररसः ।

वज्रपारदयोर्भस्म समभागं प्रकल्पयेत् ॥ ४ ॥
सूतपादं मृतं स्वर्णं सर्वं मर्द्यं दिनावधि ।
हंसपाद्या द्रवैरेव तद्गोलं चान्धितं पुटेत् ॥ ५ ॥
अर्कक्षीरैः पुनर्मर्द्यं तद्वद्गजपुटे पचेत् ।
भक्षयेत्सर्षपवृद्धं यावन्माषं विवर्धयेत् ॥ ६ ॥
शरण्यः साधकानां तु रसोऽयं वज्रपञ्जरः ।
चित्रकार्द्रकसिन्धूत्थमृततीक्ष्णसुवर्चलम् ॥ ७ ॥
समं सर्वं सदा चानु भक्ष्यं स्यात्क्रामणे हितम् ।
मासषट्कप्रयोगेण जीवेदाचन्द्रतारकम् ॥ ८ ॥
वलीपलितनिर्मुक्तो दिव्यकायो महाबलः ।

वज्रेश्वररसः ।

मृतसूताद्द्वादशांशं मृतं वज्रं प्रकल्पयेत् ॥ ९ ॥
द्वाभ्यां तुल्यं मृतं कान्तं कान्ततुल्यं मृताभ्रकम् ।
तत्सर्वं भृङ्गजैर्द्रावैर्मर्दितं भावयेत्त्र्यहम् ॥ १० ॥
त्र्यहं गोक्षुरकद्रावैः क्षौद्रैर्माषं ततो लिहेत् ।
रसो वज्रेश्वरो नाम वज्रकायकरो नृणाम् ॥ ११ ॥

---

१ 'देहमनन्तपुण्यविभवा भुक्तिश्च' ख. । २'श्रीमताम्' ख. ।

चतुर्मासैर्जरां हन्ति जीवेद्ब्रह्मदिनं किल ।
भृङ्गराजस्य पञ्चाङ्गं चूर्णयेत्त्रिफलासमम् ॥ १२ ॥
पलैकं मधुना लेह्यं क्रामकं परमं रसे ।

वज्रधारारसः ।

वज्रसूताभ्रहेम्नां तु भस्म शुद्धं तु माक्षिकम् ॥ १३ ॥
तुल्यं सप्तदिनं मर्द्यं दिव्यौषधिरसैर्दृढम् ।
रुद्ध्वा तं त्रिदिनं पच्याद्वालुकायन्त्रगं पुनः ॥ १४ ॥
उद्धृत्य त्रिदिनं भाव्यं भृङ्गसर्पाक्षिजैर्द्रवैः ।
माषैकं मधुसर्पिर्भ्यां वज्रधारारसं लिहेत् ॥ १५ ॥
मासषट्कप्रयोगेण रुद्रतुल्यो भवेन्नरः ।
वलीपलितनिर्मुक्तो वायुवेगो महाबलः ॥ १६ ॥
पुनर्नवाभृङ्गतिलवाजिगन्धाः समांशकाः ।
सर्वतुल्या सिता योज्या चूर्णितं भक्षयेत्पलम् ॥ १७ ॥

भैरवरसः ।

सुवर्णं पारदं कान्तं मृतं सर्वं समं भवेत् ।
शतावर्याः शिफाद्रावैर्भावयेद्दिवसत्रयम् ॥ १८ ॥
त्रिदिनं त्रिफलाक्वाथैर्भृङ्गद्रावैर्दिनत्रयम् ।
भावितं मधुसर्पिर्भ्यां भक्षयेद्भैरवं रसम् ॥ १९ ॥
माषैकैकं वर्षमात्रं जीवेच्चन्द्रार्कतारकम् ।
मूलचूर्णं शतावर्याः कृष्णाजपयसा युतम् ॥ २० ॥
पलैकैकं पिबेच्चानु क्रामकं परमं हितम् ।

शिलावीररसः ।

रसभस्म समं गन्धं शिलाजत्वम्लवेतसम् ॥ २१ ॥
यामैकं मर्दयेत्सर्वं मधुसर्पिर्युतं लिहेत् ।
निष्कैकैकं वर्षमात्रं शिलावीरो महारसः ॥ २२ ॥
जराकालं निहन्त्याशु जीवेद्वर्षशतत्रयम् ।
पलार्धं मुशलीचूर्णं भृङ्गराजरसैः पिबेत् ॥ २३ ॥
धात्रीफलरसैर्वाऽथ क्रामकं ह्यनुपानकम् ।

अमृतार्णवरसः ।

मेघनादद्रवैर्मर्द्यं शुद्धसूतं दिनत्रयम् ॥ २४ ॥



विडङ्गं द्विनिशां व्योषं समं चूर्णं प्रकल्पयेत् ।
आरग्वधस्य मूलं तु चूर्णस्य द्विगुणं भवेत् ॥ २५ ॥
चूर्णस्य द्विगुणं चाज्यं क्षौद्रं चैव चतुर्गुणम् ।
सर्वं पूर्वरसे क्षिप्त्वा मृद्वग्नौ चालयन् पचेत् ॥ २६ ॥
तत्पिण्डं कर्षमेकैकं भक्षयेदमृतार्णवः ।
वर्षमात्राज्जरां हन्ति जीवेद्वर्षशतत्रयम् ॥ २७ ॥
बाकुचीचूर्णकर्षैकं धात्रीफलरसैः पिबेत् ।

उदयादित्यरसः ।

पारदाद्द्विगुणं गन्धं शुद्धं सर्वं विमर्दयेत् ॥ २८ ॥
मुण्ड्यार्द्रकरसैः खल्वे त्रिसप्ताहं पुनः पुनः ।
एतत्तुल्यं शुद्धताम्रं सम्पुटे तन्निरोधयेत् ॥ २९ ॥
वेष्टयेद्वस्त्रखण्डेन वज्रमृत्तिकया बहिः ।
लिप्त्वा विशोषयेत्तं वै सम्यग्गजपुटे पचेत् ॥ ३० ॥
उद्धृत्य सम्पुटं चूर्ण्यं देवदाल्या द्रवैस्त्र्यहम् ।
भङ्गीपुनर्नवाद्रावैः पृथग्भाव्यं त्र्यहं त्र्यहम् ॥ ३१ ॥
तत्तुल्यं नागराच्चूर्णं क्षिप्त्वा मध्वाज्यसंयुतम् ।
लिहेन्माषद्वयं नित्यं यावत्संवत्सरावधि ॥ ३२ ॥
रसोऽयमुदयादित्यो जरामृत्युहरः परः ।
पुनर्नवादेवदालीभृङ्गचूर्णं समं समम् ॥ ३३ ॥
मध्वाज्याभ्यां लिहेत्कर्षमनु स्यात्क्रामणं परम् ।

गगनेश्वररसः ।

पारदो गगनं कान्तं तीक्ष्णं च मारितं समम् ॥ ३४ ॥
भृङ्गधात्रीफलद्रावैश्छायायां भावयेत्त्र्यहम् ।
सितामध्वाज्यकैस्तुल्यं सर्वं भाण्डे निरोधयेत् ॥ ३५ ॥
धान्यराशौ स्थितं मासं ततो निष्कत्रयं समम् ।
भक्षयेच्च पिबेत्क्षीरं कर्षैकं त्रिफलामनु ॥ ३६ ॥
रात्रौ शुण्ठीं कणां खादेद्वर्षैकादमरो भवेत् ।
जीवेद्ब्रह्मदिनं वीरः स्याद्रसो गगनेश्वरः ॥ ३७ ॥

वटेश्वररसः ।

वटक्षीरैस्त्र्यहं मर्द्यं गन्धं शुद्धरसं समम् ।
वटकाष्ठाग्निना पच्यान्मृत्पात्रे यामपञ्चकम् ॥ ३८ ॥
क्षिपन् क्षिपन् वटक्षीरं तत्काष्ठेनैव चालयेत् ।
समुद्धृत्य त्र्यहं भाव्यं देवदालीदलद्रवैः ॥ ३९ ॥
उष्णकाले तु गुञ्जैकं ताम्बूलपत्रसंयुतम् ।
चन्द्रवृद्ध्या सदा भक्ष्यं यावत् षोडशगुञ्जकम् ॥ ४० ॥
चूर्णमुत्तरवारुण्या बाकुच्या देवदालिजम् ।
मध्वाज्याभ्यां लिहेत्कर्षं क्रामकं ह्यनुपानकम् ॥ ४१ ॥
वर्षमात्राज्जरां हन्ति जीवेद्वर्षशतत्रयम् ।
रसो वटेश्वरो नाम वज्रकायकरो नृणाम् ॥ ४२ ॥

अचलेश्वररसः ।

मृतं सूतं शुद्धगन्धं त्रिफलां गुगुग्लुं समम् ।
सर्वं वातारितैलेन मिश्रं कर्षं लिहेत्सदा ॥ ४३ ॥
षण्मासेन जरां हन्ति जीवेद्ब्रह्मदिनत्रयम् ।
तस्य मूत्रपुरीषेण शुल्बं भवति काञ्चनम् ॥ ४४ ॥
अजस्य वृषणं पाच्यं गवां क्षीरेण तं निशि ।
सितायुक्तं पिबेच्चानु रसोऽयमचलेश्वरः ॥ ४५ ॥

परमेश्वररसः ।

रसं वज्रं स्वर्णकान्ते मुण्डं च मारितं समम् ।
माक्षिकं गन्धकं शुद्धं सर्वं जम्बीरजैर्द्रवैः ॥ ४६ ॥
सप्ताहं मर्दयेत्खल्वे तद्गोलं चान्धितं पुटेत् ।
भूधरे दिनमेकं तु ख्यातः सिद्धरसः परः ॥ ४७ ॥
माषैकं मधुना लेह्यं वर्षान्मृत्युजरापहम् ।
दिव्यकायो नरः सिद्धो भवेद्विष्णुपराक्रमः ॥ ४८ ॥
श्वेतपौनर्नवं मूलं क्षीरपिष्टं सदा पिबेत् ।
भक्षयेद्वा सिता सार्धं क्रामकं परमे[1] रसे ॥ ४९ ॥

१ 'परमेश्वरे' ख. ।



गन्धामृतरसः ।

मृतसूतस्य द्विगुणं शुद्धं गन्धं विमिश्रयेत् ।
दिनैकं कन्यकाद्रावैर्मर्दयित्वा निरोधयेत् ॥ ५० ॥
दिनैकं मधुना पच्यान्निष्कैकं मधुना लिहेत् ।
गन्धामृतो रसो नाम वत्सरान्मृत्युजिद्भवेत् ॥ ५१ ॥
समूलं भृङ्गराजं तु छायाशुष्कं विचूर्णयेत् ।
तत्समं त्रिफलाचूर्णं सर्वतुल्या सिता भवेत् ॥ ५२ ॥
एकीकृत्य पलैकैकं भक्षयेदनुपानकम् ।

कालकण्टकरसः ।

पारदाभ्रं मृतं तुल्यं द्वाभ्यां तुल्यं तु गन्धकम् ॥ ५३ ॥
तत्सर्वं भृङ्गजैर्द्रावैर्मर्दयेद्दिनसप्तकम् ।
षड्वारं चाङ्कुलीतैलैर्भावयित्वाऽथ भक्षयेत् ॥ ५४ ॥
माषमात्रं तु वर्षैकं रसोऽयं कालकण्टकः ।
पिष्ट्वा करञ्जपत्राणि गवां क्षीरैः पिबेदनु ॥ ५५ ॥
जरामृत्युविनिर्मुक्तो जीवेद्ब्रह्मदिनं नरः ।

अमृतेशरसः ।

मृतसूताभ्रकं कान्तं विषं तार्क्ष्यं शिलाजतु ॥ ५६ ॥
तुल्यांशं मधुसर्पिर्भ्यां लिहेद्गुञ्जात्रयं सदा ।
षण्मासेन जरां हन्ति जीवेद्ब्रह्मदिनं नरः ॥ ५७ ॥
अश्वगन्धामूलचूर्णं सप्तभागघृतैः समम् ।
भागाष्टकं गुडं तस्मिन् क्षिपेद्भागं च पिप्पलीम् ॥ ५८ ॥
मृद्वग्निना च तत्सर्वं पिण्डितं भक्षयेत् पलम् ।
क्रामकं ह्यमृतेशस्य रसराजस्य सिद्धये ॥ ५९ ॥

रसवीरमहारसः ।

त्रिगुणं शुद्धसूतस्य योजयेच्छुद्धगन्धकम् ।
लोहपर्पटिकाचूर्णं सूततुल्यं विनिक्षिपेत् ॥ ६० ॥
स्नुह्यर्कपयसा मर्द्यं तत्सर्वं दिवसत्रयम् ।
तच्छुष्कं चान्धितं पच्यात्करीषाग्नौ दिवानिशम् ॥ ६१ ॥

१ 'बाकुचीतैलै-' ख. ।

ततश्च टङ्कणं काचं दत्त्वा रुद्ध्वा धमेद् दृढम् ।
गुञ्जैकं मधुना खादेद्रसवीरो महारसः ॥ ६२ ॥
अब्दैकेन जरां हन्ति जीवेदाचन्द्रतारकम् ।
मुशलीमूलचूर्णं तु गुञ्जापत्रद्रवैः पिबेत् ॥ ६३ ॥
छागीमूत्रेण वा तं वै कर्षैकं कामकं परम् ।

काञ्चायनरसः ।

मृतसूतसमं गन्धं काकमाच्या द्रवैर्दिनम् ॥ ६४ ॥
मर्दितं चान्धितं पच्यात्करीषाग्नौ दिवानिशम् ।
दिव्यौषधदलद्रावैर्दिनं मर्द्यं तमन्धयेत् ॥ ६५ ॥
ध्मातं तस्मात्समुद्धृत्य तत्तुल्यं हाटकं मृतम् ।
एकीकृत्य घृतैर्लेह्यं माषैकं वत्सरावधि ॥ ६६ ॥
जरां मृत्युं निहन्त्याशु सत्यं काञ्चायनो रसः ।
काकमाचीद्रवैर्भाव्यं चूर्णं धात्रीफलोद्भवम् ॥ ६७ ॥
मधुना भक्षयेत्कर्षमनु स्यात्कामकं परम् ।

परानन्दरसः ।

मृतसूताभ्रकं गन्धं तुल्यं सप्तदिनावधि ॥ ६८ ॥
शिग्रुमूलद्रवैर्मर्द्यं तद्गोलं भाण्डमध्यगम् ।
रुद्ध्वा पच्याल्लघुत्वेन शाककाष्ठैर्दिनावधि ॥ ६९ ॥
परानन्दो रसो नाम घृतैर्निष्कं सदा लिहेत् ।
दिनैकं त्रिफलाक्वाथैः कुष्ठं सम्यग्विपाचयेत् ॥ ७० ॥
तच्छुष्कं चूर्णितं कर्षं मध्वाज्याभ्यां लिहेदनु ।
संवत्सरप्रयोगेण जीवेदाचन्द्रतारकम् ॥ ७१ ॥

महाकालरसः ।

मृतसूताभ्रकं तुल्यं मृतलोहं तयोः समम् ।
लोहांशं शोधितं गन्धं भावयेद्दिनसप्तकम् ॥ ७२ ॥
तत्सर्वं त्रिफलाक्वाथैर्भृङ्गशिग्रुकचित्रकैः ।
द्रवैः पृथक्पृथग्भाव्यं सप्तधा सप्तधा क्रमात् ॥ ७३ ॥
सप्तधा कटुकीक्वाथैर्भावितं चूर्णयेत्पुनः ।

१ 'खादेत् करवीरो' ख. ।



चूर्णतुल्यं कणाचूर्णं पुरातनगुडैः समैः ॥ ७४ ॥
सर्वमेकीकृतं खादेन्निष्कैकं वत्सरावधि ।
महाकालो रसो नाम जराकालभयङ्करः ॥ ७५ ॥
तिलकोरण्टपत्राणि गुडेन भक्षयेदनु ।

हेमपर्पटकरसः ।

मृतपारदसन्तुल्यं लोहपर्पटकं भवेत् ॥ ७६ ॥
त्रिगुणं गन्धकं सूतात्सर्वं दिव्यौषधद्रवैः ।
मर्दितं तद्दिनं रुद्ध्वा ध्मातो बद्धो भवेद्रसः ॥ ७७ ॥
तस्मिन् पादं मृतं स्वर्णं क्षिप्त्वा वह्न्यार्द्रकद्रवैः ।
मर्द्यं यामं विचूर्ण्याथ व्योषजीरकसैन्धवैः ॥ ७८ ॥
तुल्यं पूर्वरसं तुल्यं निष्कैकैकं च भक्षयेत् ।
जरामृत्युं निहन्त्याशु हेमपर्पटको रसः ॥ ७९ ॥
अश्वगन्धासमां यष्टिं धात्रीफलरसैर्दिनम् ।
भावितां लेहयेत्क्षौद्रैः पलैकां कामकं परम् ॥ ८० ॥

श्रीकण्ठरसः ।

स्वर्णतारार्ककान्तं च तीक्ष्णं वा मारितं समम् ।
कृष्णाभ्रसत्त्वमाक्षीकं प्रत्येकं स्वर्गतुल्यकम् ॥ ८१ ॥
तत्सर्वं चान्धितं ध्माप्यं तत्खोटं मृतपारदम् ।
समं सूतान्मृतं वज्रं पादांशं तत्र योजयेत् ॥ ८२ ॥
सर्वं जम्बीरजैर्द्रावैस्तप्तखल्वे विमर्दयेत् ।
दिनैकं तं निरुध्याथ भूधरे पाचयेद्दिनम् ॥ ८३ ॥
उद्धृत्य गन्धकं तुल्यं दत्त्वा रुद्ध्वा धमेद्द्रुतम् ।
तच्चूर्णं मधुनाऽऽज्येन माषमात्रं लिहेत्सदा ॥ ८४ ॥
रसः श्रीकण्ठनामाऽयं खेचरत्वं प्रयच्छति ।
संवत्सरप्रयोगेण जीवेत्कल्पान्तमेव च ॥ ८५ ॥
तस्य मूत्रपुरीषाभ्यां सर्वलोहानि काञ्चनम् ।
पलैकं गन्धकं क्षीरैः कामकं चानु पाययेत् ॥ ८६ ॥

खेचरबद्धरसः ।

शुद्धताम्रस्य भागैकं द्विपद शुद्धरसस्य च ।

अयं भूनागसत्त्वस्य भागमेकत्र कारयेत् ॥ ८७ ॥
सर्वं मर्द्यं तप्तखल्वे जम्बीराणां द्रवैर्दिनम् ।
तत्सर्वं कच्छपे यन्त्रे क्षिप्त्वा तत्रैव गन्धकम् ॥ ८८ ॥
कासमर्दरसैः पिष्टं तुल्यं दत्त्वा निरुध्य च ।
यावज्जीर्णं पुटे पच्यादेवं षड्गुणगन्धकम् ॥ ८९ ॥
जारयेत्क्रमयोगेन समुद्धृत्याथ मर्दयेत् ।
यामं जम्बीरजैर्द्रावैस्ततो निश्चन्द्रमभ्रकम् ॥ ९० ॥
अम्लवेतससन्तुल्यं मर्दितं दापयद्रसे ।
षोडशांशं तप्तखल्वे चणकाम्लं च तालकम् ॥ ९१ ॥
कासीसं च दशांशेन दत्त्वा मर्द्यं दिनावधि ।
तत्सर्वं पक्वमूषायां क्षिप्त्वा वस्त्रेण बन्धयेत् ॥ ९२ ॥
दोलायन्त्रे सारनाले त्र्यहं लघ्वग्निना पचेत् ।
उद्धृत्य क्षालयेदुष्णैः काञ्जिकैर्जीर्यते यदि ॥ ९३ ॥
अजीर्णं चेत्पचेद्यन्त्रे कच्छपाख्ये बिडान्वितम् ।
एवं पुनः पुनर्जार्यं गगनं सूततुल्यकम् ॥ ९४ ॥
शिखिपित्तप्रलिप्तानि स्वर्णपत्राणि तस्य वै ।
चतुःषष्ट्यंशयोगेन दत्त्वा खल्वे विमर्दयेत् ॥ ९५ ॥
स्वेदयेत्पूर्ववद्यन्त्रे जीर्णे स्वर्णं च दापयेत् ।
इत्येवं षोडशांशं तु स्वर्णं जार्यं रसस्य वै ॥ ९६ ॥
ततो जार्यं मृतं वज्रं षोडशांशं च हेमवत् ।
तालकासीसजम्बीरयुक्तं मर्द्यं च तत्परम् ॥ ९७ ॥
ततो दिव्यौषधद्रावैस्तं सूतं मर्दयेत्त्र्यहम् ।
वज्रमूषान्धितं धाम्यं बद्धं स्याच्चूर्णयेत्पुनः ॥ ९८ ॥
मधुशर्करया सार्धं गुञ्जामात्रं च भक्षयेत् ।
रसः खेचरबद्धोऽयं षण्मासान्मृत्युजिद्भवेत् ॥ ९९ ॥
वलीपलितनिर्मुक्तो महाबलपराक्रमः ।
सप्ताहं भृङ्गजैर्द्रावैर्नीलीमुण्डीफलत्रयम् ॥ १०० ॥
भावयेन्मधुसर्पिभ्यां कर्षमात्रं लिहेदनु ।



स्वयमग्निरसः ।

शुद्धसूतं द्विधा गन्धं कुर्यात्खल्वेन कज्जलम् ॥ १०१ ॥
तयोस्तुल्यं कान्तचूर्णं तीक्ष्णं वा मुण्डमेव वा ।
सर्वमेकीकृतं खल्वे मर्दयेत्कन्यकाद्रवैः ॥ १०२ ॥
दिनैकं गोलकं कृत्वा ताम्रपात्रे निवेशयेत् ।
आच्छाद्यैरण्डपत्रैस्तु यामार्धेऽत्युष्णतां व्रजेत् ॥ १०३ ॥
धान्यराशौ न्यसेत्तं तु द्विदिनान्ते समुद्धरेत् ।
कन्याभृङ्गीकाकमाचीमुण्डीनिर्गुण्डिचित्रकम् ॥ १०४ ॥
कोरण्टबाकुचीब्राह्मीसहदेवीपुनर्नवाः ।
शाल्मलीविजयाधूर्ता द्रवैरेषां पृथक्पृथक् ॥ १०५ ॥
सप्तधा सप्तधा भाव्यं सप्तधा त्रिफलोद्भवैः ।
कषायैर्भावितं चूर्ण्यं जातीफललवङ्गकम् ॥ १०६ ॥
त्रिकटु त्रिफला चैला चूर्णयेन्नवकं समम् ।
तच्चूर्णं पूर्वचूर्णं च समं क्षौद्रेण कर्षकम् ॥ १०७ ॥
वर्षैकं लेहयेन्नित्यं जराकालप्रशान्तये ।
स्वयमग्निरसो नाम सिद्धानां सुमुखागतः ॥ १०८ ॥
तिलाश्वगन्धयोश्चूर्णं पलार्धं मधुना लिहेत् ।

कक्षपुटरसः ।

निर्गुण्डी नीलिका वज्री ब्रह्मदण्डी त्रिदण्डिका ॥ १०९ ॥
शतपुष्पा मुद्गपर्णी श्वेतार्को वानरी जया ।
पेटारीकृष्णधत्तूरविजयाक्षीरकन्दकम् ॥ ११० ॥
एतैः समस्तैर्व्यस्तैर्वा द्रव्यैर्मर्द्यं दिनत्रयम् ।
शुद्धसूतं तप्तखल्वे तत्कल्कं क्षीरकन्दके ॥ १११ ॥
वज्रकन्देऽथवा रुद्ध्वा तन्मज्जाभिर्मृदा पुनः ।
तं कन्दं वज्रमूषायां रुद्ध्वा लघुपुटे पचेत् ॥ ११२ ॥
पुनर्मर्द्यं पुनः पाच्यमित्येवं सप्तधा क्रमात् ।
रसः कक्षपुटो नाम गुञ्जैकं मधुना लिहेत् ॥ ११३ ॥
जीवेद्ब्रह्मदिनैकं तु वलीपलितवर्जितः ।
वर्षैकेन न सन्देहो रसकायो भवेन्नरः ॥ ११४ ॥

भल्लातबीजचूर्णं च हयगन्धामृताघृतैः ।
पलैकं भक्षयेच्चानु क्रामकं परमं हितम् ॥ ११५ ॥

महाशक्तिरसः ।

मृतसूताभ्रकं वज्रं कान्ततारार्कहाटकम् ।
तीक्ष्णं च तुल्यतुल्यांशं सर्वेषां गन्धकं समम् ॥ ११६ ॥
सर्वं पालाशतैलेन मर्दयेद्दिनसप्तकम् ।
महाशक्तिरसो नाम क्षौद्रैर्माषं लिहेत्सदा ॥ ११७ ॥
षण्मासेन जरां हन्ति जीवेद्ब्रह्मदिनत्रयम् ।
वत्सरात्सप्तकल्पानि जीवत्येव न संशयः ॥ ११८ ॥
इच्छावेगी महासिद्धः पराशक्तिसमो भवेत् ।
तस्य मूत्रपुरीषाभ्यां ताम्रं भवति काञ्चनम् ॥ ११९ ॥
पालाशबीजजं तैलं क्षौद्रैर्लेह्यं पलाष्टकम् ।
क्रामकं ह्यनुपानं स्यात्सम्यक्छक्त्या प्रकाशितम् ॥ १२० ॥

नारकेश्वररसः ।

लोहितं वाऽथ वा कृष्णं वैक्रान्तं मारितं पलम् ।
स्वर्णचूर्णपलैकं च द्विपलं शुद्धपारदम् ॥ १२१ ॥
बालरण्डाजमूत्राभ्यां तत्सर्वं मर्दयेद्दिनम् ।
शरपुङ्खा मेषशृङ्गी सर्पाक्षीकटुतुम्बिका ॥ १२२ ॥
इन्द्रवारुणिका चैषां द्रवैर्मर्द्यं दिनत्रयम् ।
तद्गोलं गर्भयन्त्रे तु रुद्ध्वा पच्याद्दिनत्रयम् ॥ १२३ ॥
तुषाग्निना लघुत्वेन समुद्धृत्य विचूर्णयेत् ।
सप्तधा भृङ्गजैर्द्रावैर्भावितं चूर्णयेत्पुनः ॥ १२४ ॥
त्रि[1]फलाव्यूषमध्वाज्यैः समं चूर्णं विमिश्रयेत् ।
माषैकैकं सदा खादेद्रसोऽयं [2]नाटकेश्वरः ॥ १२५ ॥
सर्वरोगजरामृत्यून् वत्सरान्नाशयत्यलम् ।
दिव्यतेजा महाकायो जीवेदाचन्द्रतारकम् ॥ १२६ ॥
मूलत्वचं ब्रह्मवृक्षाच्छायाशुष्कां विचूर्णिताम् ।
पिबेन्निष्कद्वयां तक्रैः क्रामकं परमं शुभम् ॥ १२७ ॥

---

१ 'त्रिफलोषणमध्वाज्यैः' ख. । २ 'हाटकेश्वरः' क. ।



बालसुन्दररसः ।

सुशुद्धं श्वेतवैक्रान्तं सप्ताहं भाव्यमातपे ।
अम्लवेतससम्पिष्टं तेनैव द्रुतिमाप्नुयात् ॥ १२८ ॥
एतद्द्रुतिं शुद्धसूतं समं क्षौद्रैर्दिनत्रयम् ।
मर्दितं लेहयेन्माषं मासाद्बालो भवेन्नरः ॥ १२९ ॥
वत्सराद्ब्रह्मतुल्यः स्याद्रसोऽयं बालसुन्दरः ।
बाकुचीबीजकर्षैकं मध्वाज्याभ्यां लिहेदनु ॥ १३० ॥

ब्रह्मपञ्जररसः ।

चतुःपलं शुद्धसूतं पलैकं मृतहाटकम् ।
पलाशकुड्मलद्रावैस्तत्तैलैश्च दिनत्रयम् ॥ १३१ ॥
मर्दयेत्तप्तखल्वे तु स्वर्णतुल्यं च गन्धकम् ।
शोधितं निक्षिपेत्तस्मिन् पूर्वोक्तैर्मर्दयेद्दिनम् ॥ १३२ ॥
माषमात्रां वटीं खादेद्वत्सरान्मृत्युजिद्भवेत् ।
जीवेद्ब्रह्मदिनं वीरो रसोऽयं ब्रह्मपञ्जरः ॥ १३३ ॥
वानरीकाकतुण्ड्युत्थबीजचूर्णं [1]समं समम् ।
शाल्मलीत्वग्दलद्रावैर्भावयेद्दिवसत्रयम् ॥ १३४ ॥
त्र्यहं च भृङ्गजैर्द्रावैर्भावितं चूर्णयेत्ततः ।
पुरातनगुडैस्तुल्यं कर्षैकमनु भक्षयेत् ॥ १३५ ॥

शिवामृतरसः ।

रक्तभूमौ तु भूनागान् ग्राहयित्वा परीक्षयेत् ।
छेदे निर्याति रक्तं चेत्तान् स्वीकुर्यात्प्रयत्नतः ॥ १३६ ॥
कृष्णवर्णगवाज्येन समेन सह तान् पचेत् ।
लोहजे चालयन् पात्रे यावत्सिन्दूरवर्णकम् ॥ १३७ ॥
तत्सर्वं जायते भस्म तत्तुल्यं मृतपारदम् ।
मधुनाऽऽलोडितं सर्वं गुञ्जार्धार्धं विवर्धयन् ॥ १३८ ॥
पश्चाद्गुञ्जां सदा खादेद्यावत्संवत्सरावधि ।
शिवामृतो रसो नाम जरामृत्युहरो नृणाम् ।
आयुर्ब्रह्मदिनं दत्ते शिवाम्बु पाययेदनु ॥ १३९ ॥

---

१ 'तिलैः सह' ख. ।

एवं दिव्यरसायनैः समुचितैः सारातिसारैः शुभैः
सिद्धं देहमनेकसाधनबलाद्येषां तु दृष्टं मया।
तानाराध्य च तेषु सारमखिलं सङ्गृह्य शास्त्रादपि
भूपानां विदुषां महामतिमतां प्रोक्तं हितार्थाय वै ॥१४०॥

इति श्रीपार्वतीपुत्रनित्यनाथसिद्धविरचिते रसरत्नाकरे चतुर्थे रसायनखण्डे
दिव्यरसैर्देहसाधनं नाम द्वितीय उपदेशः ॥ २ ॥

---

## अथ तृतीयोपदेशः ।

दिव्ययोगगुटिकारसायनं क्रामणेन रहितं न सिध्यति।
शीघ्रसिद्धिकरमेव[1] सेव्यतां क्रामणार्थमनुपानमत्र वै ॥ १ ॥

मृतसञ्जीवनीगुटिका।

काकतुम्बी काकमाची निर्गुण्डी च कुमारिका।
गोजिह्वा सैन्धवं गुञ्जा ह्यार्द्रकं च समं समम् ॥ २ ॥
पिष्ट्वा तेन प्रलेप्तव्या मूषा सर्वाऽङ्गुलावधि।
पारदं व्योमसत्त्वं च कान्तं तीक्ष्णं च मुण्डकम् ॥ ३ ॥
ताप्यसत्त्वं च तुल्यांशं सर्वं सञ्चूर्ण्य मर्दयेत्।
दिनं जम्बीरजैर्द्रावैस्तन्मूषायां विनिक्षिपेत् ॥ ४ ॥
आच्छाद्यालेप्य कल्केन चान्धयित्वा विशोषयेत्।
करीषाग्नौ दिवारात्रं पुटे पक्त्वा समुद्धरेत् ॥ ५ ॥
पुनः प्रलिप्तमूषायां क्षिप्त्वा रुद्ध्वा पुटेत्ततः।
इत्येवं दशमूषासु प्रलिप्तासु विपाचयेत् ॥ ६ ॥
जायते गुटिका दिव्या मृतसञ्जीवनी परा।
वक्त्रे शिरसि कण्ठे वा कर्णे वा[2] धारिता करे ॥ ७ ॥
हेम्ना सुवेष्टिता सम्यग्वयःस्तम्भकरी परा।
वलीपलितकालाग्निमृत्युशङ्काविनाशनी ॥ ८ ॥
वर्षमात्रान्न सन्देहो जीवेद्वर्षशतत्रयम्।
शुद्धगन्धपलैकं तु गवां क्षीरैः पिबेत्सदा ॥ ९ ॥
अनेन त्वनुपानेन देहे सङ्क्रमते रसः।

---

१ 'देहसिद्धिकरमेव' ख.। २ 'बाधां हरेदियम्' ख.।



वज्रेश्वरीगुटिका।

समुखं पारदं कान्तं मुण्डलोहाभ्रसत्त्वकम् ॥ १० ॥
ताप्यसत्त्वं मृतं वज्रं सर्वं जम्बीरजैर्द्रवैः।
सप्ताहं मर्दयेत्तुल्यं कृत्वा गोलं समुद्धरेत् ॥ ११ ॥
निर्गुण्डी सैन्धवं क्षौद्रं गोजिह्वा काकतुण्डिका।
पिष्ट्वा तु लेपयेद्गोलं सर्वतोऽङ्गुलमात्रकम् ॥ १२ ॥
तं रुद्ध्वा वज्रमूषायां पचेद्यामं तु भूधरे।
लिप्त्वा रुद्ध्वा पुनः पाच्यमित्येवं पक्षमात्रकम् ॥ १३ ॥
यवचिञ्चापलाशोत्थराजीकार्पासबीजकैः।
सुपिष्टैर्लेपयेन्मूषां तन्मध्ये पूर्वगोलकम् ॥ १४ ॥
टङ्कणं श्वेतकाचं च दत्त्वा पृष्ठे निरुध्य च।
खदिराङ्गारयोगेन धमेद्यावद्द्रुतं भवेत् ॥ १५ ॥
ततस्तं बिडलिप्तायां मूषायां च निवेशयेत्।
तत्तुल्यं दापयेत्स्वर्णं जारयेत्तं धमन् धमन् ॥ १६ ॥
जीर्णे स्वर्णे समुद्धृत्य तप्तखल्वे विमर्दयेत्।
त्र्यहं दिव्यौषधिद्रावैर्वज्रमूषान्धितं धमेत् ॥ १७ ॥
जायते गुटिका दिव्या नाम्ना वज्रेश्वरी परा।
वक्त्रस्था सा जरां मृत्युं हन्ति संवत्सरात्किल ॥ १८ ॥
शस्त्रस्तम्भं च कुरुते ब्रह्मायुर्यच्छति ध्रुवम्।
कृष्णाष्टम्यां समादाय सहदेवीं सुचूर्णयेत् ॥ १९ ॥
कर्षैकां भक्षयेदाज्यैरनु स्यात्क्रामेण हितम्।

वज्रसुन्दरीगुटिका।

आरक्तं मेघनादं तु तथा पाषाणभेदकम् ॥ २० ॥
स्त्रीस्तन्यसहितं पिष्ट्वा तेन मूषां प्रलेपयेत्।
भागैकं मृतवज्रस्य स्वर्णचूर्णस्य षोडश ॥ २१ ॥
क्षिप्त्वा तस्यां निरुन्ध्याथ याममात्रं दृढं धमेत्[1]।
उद्धृत्य निक्षिपेत्खल्वे शुद्धसूतं च तत्समम् ॥ २२ ॥

---

१ 'पिष्टैर्निरुन्धयेत्' ख.।

मर्दयेच्चार्द्रकद्रावैर्यावद्भवति गोलकः ।
चण्डालीकन्दमादाय स्त्रीस्तन्येन सुपेषयेत् ॥ २३ ॥
अनेन गोलकं लिप्त्वा वज्रमूष्यां निरोधयेत् ।
पक्त्वा गजपुटे ग्राह्या गुटिका वज्रसुन्दरी ॥ २४ ॥
वर्षैकं धारयेद्वक्त्रे जीवेद्ब्रह्मदिनत्रयम् ।
ब्रह्मवृक्षस्य त्वक्चूर्णं क्षीरैर्नित्यं पलं पिबेत् ॥ २५ ॥
क्रामणं ह्यनुपानं स्यात्साधकस्यातिसिद्धिदम् ।
तदुद्भवमलैर्लिप्तं ताम्रं तु धमनेन हि ॥ २६ ॥
जायते कनकं दिव्यं सत्यं शङ्करभाषितम् ।

हेमसुन्दरीवटिका ।

समुखस्य रसेन्द्रस्य पूर्ववत्काञ्चनं समम् ॥ २७ ॥
जारयेद्विडयोगेन ततो मर्द्यं दिनत्रयम् ।
दिव्यौषधैः सगोमूत्रैर्वज्रमूषान्वितं धमेत् ॥ २८ ॥
उद्धृत्य धारयेद्वक्त्रे गुटिका हेमसुन्दरी ।
पलार्धं गन्धकं चाद्यैर्द्विगुणैर्लेहयेदनु ॥ २९ ॥
वर्षैकेन जरां हन्ति जीवेदाचन्द्रतारकम् ।

वज्रखेचरीगुटिका ।

शुद्धसूतं मृतं वज्रं व्योमसत्त्वं सहाटकम् ॥ ३० ॥
अम्लवर्गे समं सर्वं मर्दयेद्दिवसत्रयम् ।
तद्गोलकं दृढं कृत्वा छायायां शोषयेत्ततः ॥ ३१ ॥
ब्रह्मकार्पासबीजानि राजिका यवचिञ्चिका ।
वन्ध्या सर्वं समं पिष्ट्वा पूर्वगोलं प्रलेपयेत् ॥ ३२ ॥
रुद्ध्वा गजपुटे पच्यात्समुद्धृत्याथ लेपयेत् ।
रुद्ध्वा मूष्यां धमेद्गाढं गुटिका वज्रखेचरी ॥ ३३ ॥
जायते धारिता वक्त्रे वत्सरान्मृत्युनाशिनी ।
भूतारवटचूर्णं तु पलैकं सितया युतम् ॥ ३४ ॥
भक्षयेत्क्रामणार्थं तु ब्रह्मायुर्जायते नरः ।

---

१ 'क्षिप्त्वा तु मर्दयेच्चानु आर्द्रकस्य द्रवैः पुनः' ख.।
२ 'सुरसुन्दरी' ख.। ३ 'भूतावरटचूर्ण' ख.



व्योमसुन्दरी वटिका ।

कार्पास्याः काकमाच्याश्च कन्यायाश्च दलद्रवैः ॥ ३५ ॥
शुद्धसूतं दिनं मर्द्यं क्षाल्यमम्लैः समुद्धरेत् ।
तद्रसं निष्कचत्वारि निष्कार्धं ताम्रचूर्णकम् ॥ ३६ ॥
पादोननिष्कमभ्रोत्थं सत्त्वं पादं च हाटकम् ।
हेमतुल्यं मुण्डचूर्णं सर्वमम्लैर्विमर्दयेत् ॥ ३७ ॥
दिनान्ते गोलकं कृत्वा जम्बीरस्योदरे क्षिपेत् ।
त्रिदिनं दोलकायन्त्रे पाचयेत्सारनालके ॥ ३८ ॥
उद्धृत्य धारयेद्वक्त्रे गुटिका व्योमसुन्दरी ।
वर्षमात्राज्जरां हन्ति जीवेद्ब्रह्मदिनं नरः ॥ ३९ ॥
चित्रमूलस्य चूर्णं तु सक्षौद्रं कान्तपात्रके ।
आलोड्य भक्षयेत्कर्षमनु स्यात्क्रामणे हितम् ॥ ४० ॥

हाटकेश्वरीगुटिका ।

निष्कमेकं स्वर्णपत्रं त्रिनिष्कं शुद्धपारदम् ।
जम्बीरशरपुङ्खोत्थद्रवैर्मर्द्यं दिनावधि ॥ ४१ ॥
तद्गोलं बन्धयेद्वस्त्रे पचेद्गोक्षीरपूरिते ।
दोलायन्त्रे दिवारात्रं गुटिका हाटकेश्वरी ॥ ४२ ॥
जायते धारिता वक्त्रे जरामृत्युविनाशिनी ।
वर्षमात्रान्न सन्देहो जीवेद्वर्षायुतं नरः ॥ ४३ ॥
दिनैकं त्रिफलाचूर्णं क्वाथैः खदिरबीजकैः ।
भावितं मधुसर्पिभ्यां पलैकं क्रामकं लिहेत् ॥ ४४ ॥

अर्कप्रभावती गुटिका ।

रसनिष्कत्रयं शुद्धं निष्कैकं ताम्रचूर्णकम् ।
चिञ्चाफलाम्लतक्राभ्यां खल्वे मर्द्यं दिनावधि ॥ ४५ ॥
तद्गोलं बन्धयेद्वस्त्रैस्तक्रचिञ्चाम्लपूरिते ।
दोलायन्त्रे दिनं पच्याद्गुटिकाऽर्कप्रभावती ॥ ४६ ॥
वर्षैकं धारयेद्वक्त्रे सूर्यतुल्यो भवेन्नरः ।
पालाशबीजजं तैलं गोक्षीरैः कर्षमात्रकम् ॥ ४७ ॥
क्रामकं ह्यनुपानं स्याज्जरामृत्युहरं परम् ।

सुरसुन्दरी वटिका ।

स्वर्णमेकं कान्तमेकं पञ्चतारं द्विपारदम् ॥ ४८ ॥
त्रिभागं व्योमसत्त्वं स्यात् षड्भागं शुल्बचूर्णकम् ।
सर्वमेतत्कृतं सूक्ष्मं तप्तखल्वे दिनत्रयम् ॥ ४९ ॥
मर्दयेदम्लवर्गेण दोलायन्त्रे सकाञ्जिके ।
तद्गोलं त्रिदिनं पच्याद्गुटिका सुरसुन्दरी ॥ ५० ॥
जायते धारिता वक्त्रे वर्षान्मृत्युजरापहा ।
[1]भूतारवटमूलं च कर्षं क्षीरैः पिबेदनु ॥ ५१ ॥

वज्रतुण्डावटिका ।

स्वर्णताराऽर्कमुण्डं च वङ्गसीसाभ्रसत्त्वकम् ।
एतत्सर्वं समं चूर्णं चूर्णांशं मृतवज्रकम् ॥ ५२ ॥
सर्वतुल्यं शुद्धसूतं सर्वं दिव्यौषधिद्रवैः ।
मर्दयेद्दिनमेकं तु वज्रमूषान्धितं धमेत् ॥ ५३ ॥
गुटिका वज्रतुण्डेयं जायते धारिता मुखे ।
जरामृत्युं शस्त्रसङ्घं नाशयेद्वत्सरात्किल ॥ ५४ ॥
वज्रकायो महावीरो जीवेद्वर्षशतत्रयम् ।
कुमार्याः स्वरसं ग्राह्यं गुडेन सह लोडयेत् ॥ ५५ ॥
पलैकं कामकं लेह्यमनुपानं सदैव हि ।

कामसुन्दरीगुटिका ।

स्वर्णचूर्णं तु भागैकं त्रिभागं शुद्धपारदम् ॥ ५६ ॥
पादभागं मृतं वज्रं तत्सर्वं क्षीरकन्दजैः ।
द्रवैश्च देवदाल्युत्थैस्तप्तखल्वे दिनावधि ॥ ५७ ॥
मर्दयेत्कान्तचूर्णं च वज्रतुल्यं क्षिपेच्च वै ।
वज्रमूषान्धितं धाम्यं गुटिका कामसुन्दरी ॥ ५८ ॥
जायते धारिता वक्त्रे वर्षान्मृत्युजरापहा ।
निष्कत्रयं ब्रह्मतैलं गवां क्षीरं पलद्वयम् ॥ ५९ ॥
मिश्रितं पाययेच्चानु लक्षायुर्जायते नरः ।

१ 'भूतावरटमूलं' ख. ।



गन्धारीगुटिका ।

लोहपात्रे द्रुते गन्धे पादांशं पारदं क्षिपेत् ॥ ६० ॥
किञ्चिच्चाल्यं तु काष्ठेन मुहूर्तादवतारयेत् ।
शतावरी क्षीरकन्दो वज्रवल्लीन्द्रवारुणी ॥ ६१ ॥
पाठा पुनर्नवा चिञ्चा लाङ्गली सुरदालिका ।
एतासां वस्त्रपूतैश्च द्रवैर्मर्द्यं दिनत्रयम् ॥ ६२ ॥
तस्मिन् पात्रे लोहमुष्ट्या छाया[1]शुष्कं वटीकृतम् ।
लोहसम्पुटगं रुद्ध्वा सन्धिं मृल्लवणैर्दृढम् ॥ ६३ ॥
तं धमेत्खदिराङ्गारे यावदारक्तमुद्धरेत् ।
उत्खन्योत्खन्य तन्मध्यादुद्धरेत्तद्रसं पुनः ॥ ६४ ॥
काचटङ्कणसंयुक्तं मूषायां चान्धितं पचेत् ।
गान्धारीगुटिका सिद्धा वर्षं वक्त्रे स्थिता सदा ॥ ६५ ॥
काकतुण्डीबीजतैलं कर्षैकं नस्यमाचरेत् ।
कामकं ह्यनुपानं स्याज्जीवेद्वर्षसहस्रकम् ॥ ६६ ॥

मार्तण्डी गुटिका ।

शुद्धसूतसमं गन्धं मर्दनात्कज्जलीकृतम् ।
तत्ताम्रसम्पुटे रुद्ध्वा लवणेन मृदा दृढम् ॥ ६७ ॥
शुष्कं दी[2]प्ताग्निना पच्याद्यामैकं भस्मयन्त्रके ॥ ६८ ॥
सम्पुटस्योर्ध्वलग्नं तत्समुद्धृत्याथ मर्दयेत् ।
तुल्यपारदसंयुक्तं पूर्ववत्सम्पुटे पचेत् ॥ ६९ ॥
उद्धृत्य तुल्यसूतेन संयुक्तं मर्दितं पचेत् ।
इत्येवं सप्तधा कुर्यात्पुनः पारदटङ्कणम् ॥ ७० ॥
तुल्यं तुल्यं क्षिपेत्तस्मिन् दिनं सर्वं विमर्दयेत् ।
वज्रमूषागतं रुद्ध्वा ध्माते [3]खोटो भवेद्रसः ॥ ७१ ॥
मार्तण्डी गुटिका ह्येषा वर्षैकं यस्य वक्त्रगा ।
वलीपलितमुक्तोऽसौ जीवेदाचन्द्रतारकम् ॥ ७२ ॥
पलाशबीजजं तैलं पलैकं क्षीरतुल्यकम् ।
कामणं प्रपिबेन्नित्यं तत्क्षणान्मूर्च्छितो भवेत् ॥ ७३ ॥

१ 'शुष्कं तं च विचूर्णयेत्' ख. २ 'दीप्ताग्निना' ख. । ३ 'बद्धो' ख. ।

तस्य वक्त्रे गवां क्षीरं स्तोकं स्तोकं निषेचयेत् ।
प्रबुद्धे क्षीरमन्नं स्याद्भोजने परमं हितम् ॥ ७४ ॥
तस्य मूत्रपुरीषाभ्यां ताम्रं भवति काञ्चनम् ।
वायुवेगो महासिद्धश्छिद्रां पश्यति मेदिनीम् ॥ ७५ ॥

तारकेश्वरीगुटिका ।

काकमाच्यमृताद्रावैः पारदं तालकं समम् ।
मर्दयेद्दिनमेकं तु कृत्वा गोलं विशोषयेत् ॥ ७६ ॥
निक्षिपेद्वज्रमूषायामाच्छाद्य लोहपर्पटैः[1] ।
रुद्ध्वा सन्धिं धमेद्गाढं खोटबद्धो भवेद्रसः ॥ ७७ ॥
लोहपर्पटकं दत्त्वा तद्वद्धाम्यं त्रिधा पुनः ।
वर्षैकं धारयेद्वक्त्रे गुटिका तारकेश्वरी ॥ ७८ ॥
बाकुचीबीजकर्षैकं गवां क्षीरैः पिबेदनु ।

विद्यावागीश्वरी गुटिका ।

व्योमसत्त्वं मृतं वज्रं स्वर्णतारार्कमुण्डकम् ॥ ७९ ॥
तीक्ष्णं कान्तं तालकं च शुद्धं कृत्वा विमिश्रयेत् ।
सूक्ष्मचूर्णं समं सर्वं चूर्णांशं शुद्धपारदम् ॥ ८० ॥
त्रिदिनं चाम्लवर्गेण मर्दितं चान्धितं धमेत् ।
विद्यावागीश्वरी ख्याता गुटिका वत्सरावधि ॥ ८१ ॥
यस्य वक्त्रे स्थिता तस्य जरा मृत्युर्न विद्यते ।
कर्षं ज्योतिष्मतीतैलं क्रामणार्थं पिबेत्सदा ॥ ८२ ॥
वाक्पतिर्जायते धीरो जीवेच्चन्द्रार्कतारकम् ।

वज्रतुण्डावटिका ।

कान्तपाषाणमाक्षीकं टङ्कणं कर्कटास्थि च ॥ ८३ ॥
स्नुह्यर्कक्षीरभूनागं सर्वमेतत्समं भवेत् ।
स्त्रीस्तन्येन दिनं मर्द्यं तेन मूषां प्रलेपयेत् ॥ ८४ ॥
तन्मध्ये द्रुत[2]सूतं तु वज्रभस्म समं समम् ।
क्षिप्त्वा रुद्ध्वा पुटे पच्याद्गजाख्ये याममात्रकम् ॥ ८५ ॥
ततः प्रलिप्तमूषायां क्षिप्त्वा रुद्ध्वा धमेद्दृढात् ।

१ 'पर्पटीरसैः' ख २ 'शुद्धसूतं' ख ।



एवं पुनः पुनः कार्यं वज्रसूतं मिलत्यलम् ॥ ८६ ॥
ततस्तस्यैव दातव्यं समं काचं सटङ्कणम् !
एवं मूषाशते देयं तुल्यं तुल्यं धमन् धमन् ॥ ८७ ॥
तेजःपुञ्जो रसेन्द्रोऽसौ भवेन्मार्तण्डसन्निभः ।
गुटिका वज्रतुण्डेयं वक्त्रस्था मृत्युनाशिनी ॥ ८८ ॥
वर्षमात्रान्न सन्देहो रुद्रतुल्यो भवेन्नरः ।
तस्य मूत्रपुरीषाभ्यां पूर्ववत्काञ्चनं भवेत् ॥ ८९ ॥
पञ्चाङ्गं भक्षयेत्कर्षं रुदन्त्या मधुसर्पिषा ।

गगनेश्वरीगुटिका ।

टङ्कणं कर्कटास्थीनि ऊर्णा चैव शिलाजतु ॥ ९० ॥
महिषीकर्णनेत्रोत्थ मलं स्त्रीस्तन्यकैः समम् ।
पिष्ट्वा तल्लिप्तमूषायामभ्रसत्त्वं क्षिपेद्धमेत् ॥ ९१ ॥
सत्त्वतुल्यं क्षिपेत्तत्र पूर्ववद्[1]द्रुतपारदम् ।
द्रवं दिव्यौषधीनां च दत्त्वा तत्रैव तद्धमेत् ॥ ९२ ॥
मिलितो जायते बद्धः पूर्ववत्काचटङ्कणैः ।
ध्मातो मूषाशतेनायं तेजःपुञ्जो भवेद्रसः ॥ ९३ ॥
वर्षैकं धारयेद्वक्त्रे शिवतुल्यो भवेन्नरः ।
अजरामरकारीयं गुटिका गगनेश्वरी ॥ ९४ ॥
बिल्वबीजोत्थितं तैलं निष्कमात्रं पिबेदनु ।
उदरे जायते वह्निः पिबेत्क्षीरं पुनः पुनः ॥ ९५ ॥
साक्षाज्जातिस्मरत्वं च कवित्वं श्रुतधारणम् ।
खेचरत्वमदृश्यत्वं जायते नात्र संशयः ॥ ९६ ॥

आनन्दगुटिका ।

अग्निमन्थो वज्रवल्ली सूरणं वनसूरणम् ।
चित्रकश्च द्रवैरेषां शुद्धसूतं दिनावधि ॥ ९७ ॥
मर्दयेत्तप्तखल्वे तु तं रसं पलमात्रकम् ।
पलं पलं तालवङ्गौ तत्सर्वं चाम्लवेतसैः ॥ ९८ ॥
मर्दयेद्दिनमेकं तु कृत्वा तं गोलकं पुनः ।

१ 'पूर्ववच्छुद्धपारदम्' ख. ।

चतुःपलां नागमूषां कृत्वा तस्यां तु तन्निक्षिपेत् ॥ ९९ ॥
चतुष्पले शुद्धताम्रसम्पुटे तां निरोधयेत् ।
मृण्मूषायां तु तां रुद्ध्वा आरण्योत्पलकैः पुटेत् ॥ १०० ॥
शतद्वयप्रमाणैस्तु स्वाङ्गशीतं समुद्धरेत् ।
सर्वं दिव्यौषधद्रावैर्मर्दयेद्दिवसत्रयम् ॥ १०१ ॥
चतुर्निष्कमिता कार्या वटिका, शोषयेत्ततः ।
एकैकां वज्रमूषायां रुद्ध्वा तीव्राग्निना धमेत् ॥ १०२ ॥
आनन्दगुटिका ह्येषा वक्त्रस्था मृत्युनाशिनी ।
वत्सरान्नात्र सन्देहो जीवेद्ब्रह्मदिनत्रयम् ॥ १०३ ॥
तैलं वातारिबीजोत्थं गोक्षीरैर्निष्कमात्रकम् ।
कामनार्थं पिबेन्नित्यं शीघ्रसिद्धिकरं परम् ॥ १०४ ॥

वज्रखेचरिकावटिका ।

वज्रभस्मसमं सूतं हंसपाद्या द्रवैस्त्र्यहम् ।
मर्दितं द्वन्द्वलिप्तायां मूषायां चान्धितं पुटेत् ॥ १०५ ॥
भूधराख्ये दिवारात्रौ समुद्धृत्याथ तस्य वै ।
पूर्वांशं पारदं दत्त्वा हंसपाद्या द्रवैस्त्र्यहम् ॥ १०६ ॥
मर्दितं द्वन्द्वलिप्तायां मूषायां चान्धितं धमेत् ।
तत्खोटं धमनाच्छोध्यं काचटङ्कणयोगतः ॥ १०७ ॥
नक्षत्राभं भवेद्यावत्तावद्भ्राम्यं पुनः पुनः ।
तद्रसं व्योमसत्त्वं च काञ्चनं च समं समम् ॥ १०८ ॥
समावर्त्य ततः कार्या गुटिका वक्त्रमध्यगा ।
वज्रखेचरिका नाम वत्सरान्मृत्युनाशिनी ॥ १०९ ॥
वलीपलितनिर्मुक्तो दिव्यकायो भवेन्नरः ।
निर्गुण्डीमुनिचूर्णं तु कर्षमाज्यैः पिबेदनु ॥ ११० ॥

रत्नेश्वरी गुटिका ।

कान्तं शुल्बं समं चूर्ण्यं वज्रमूषान्धितं धमेत् ।
तत्खोटसिद्धचूर्णं तु गन्धकाम्लेन मर्दयेत् ॥ १११ ॥
रुद्ध्वा सम्यक्पुटे पच्यात्समुद्धृत्याथ मर्दयेत् ।
पूर्ववत्क्रमयोगेन पुटेद्वारांश्चतुर्दश ॥ ११२ ॥



वज्रेण द्वन्द्वितं स्वर्णमनेनैव तु रञ्जयेत् ।
मूषामध्ये धमन्नेवं सप्तवारं समं क्षिपेत् ॥ ११३ ॥
तत्खोटं चूर्णितं भाव्यं स्त्रीपुष्पेण दिनावधि ।
तत्तुल्यं द्रुतसूतं तु सर्वं यामं विमर्दयेत् ॥ ११४ ॥
वेष्टयेद्भूर्जपत्रेण वस्त्रे बद्ध्वा पचेत्त्र्यहम् ।
दोलायन्त्रे सारनाले जातं गोलं समुद्धरेत् ॥ ११५ ॥
गान्धारी जीवनी चैव लाङ्गली चेन्द्रवारुणी ।
एतासां पिण्डकल्केन वेष्टयेत्पूर्वगोलकम् ॥ ११६ ॥
अन्धयित्वा दिनं पच्याद्भूधरे तं समुद्धरेत् ।
पुनर्लेप्यं पुनः पाच्यं चतुर्दशदिनावधि ॥ ११७ ॥
गुटिका जायते दिव्या नाम्ना रत्नेश्वरी तथा ।
वक्त्रस्था वर्षमात्रं तु नन्दितुल्यो भवेन्नरः ॥ ११८ ॥
जीवेद्वर्षसहस्राणि दिव्यतेजा महाबलः ।
वर्षद्वादशपर्यन्तं यस्य वक्त्रे स्थिता तु सा ॥ ११९ ॥
तस्य प्रस्वेदसम्पर्काद्दृष्टलोहानि काञ्चनम् ।
जायन्ते नात्र सन्देहः सत्यमीश्वरभाषितम् ॥ १२० ॥
पञ्चाङ्गचूर्णं मध्वाज्यै रुदन्त्युत्थं लिहेदनु ।

दिव्यखेचरीवटिका ।

स्वर्णं कृष्णाभ्रसत्त्वं च तारं ताम्रं सुचूर्णितम् ॥ १२१ ॥
समांशं द्वन्द्वलिप्तायां मूषायां चान्धितं धमेत् ।
तत्खोटं भागचत्वारि भागैकं मृतवज्रकम् ॥ १२२ ॥
माक्षिकं तीक्ष्णकान्तं च भागैकैकं सुचूर्णितम् ।
समस्तं द्वन्द्वलिप्तायां मूषायां चान्धितं धमेत् ॥ १२३ ॥
तत्खोटं सूक्ष्मचूर्णं तु चूर्णांशं द्रुतसूतकम् ।
त्रिदिनं तप्तखल्वे तु मर्द्यं दिव्यौषधिद्रवैः ॥ १२४ ॥
रुद्ध्वाऽथ भूधरे पच्यादहोरात्रात्समुद्धरेत् ।
द्रुतसूतं पुनस्तुल्यं दत्त्वा मर्द्यं पुटेत्तथा ॥ १२५ ॥
इत्येवं सप्तवारांस्तु द्रुतं सूतं समं समम् ।
दत्त्वा मर्द्यं पुटे पच्याज्जायते भस्मसूतकः ॥ १२६ ॥

भस्मसूतसमं गन्धं दत्त्वा रुद्ध्वा धमेद्दृढम् ।
जायते गुटिका दिव्या विख्याता दिव्यखेचरी ॥ १२७ ॥
वर्षैकं धारयेद्वक्त्रे जीवेत्कल्पसहस्रकम् ।
तस्य मूत्रपुरीषाभ्यां सर्वलोहस्य लेपनात् ॥ १२८ ॥
जायते कनकं दिव्यं समावर्तं न संशयः ।
पलद्वयं भृङ्गराजद्रव्यं चानु पिबेत्सदा ॥ १२९ ॥
पूर्वोक्तं भस्मसूतं वा गुञ्जामात्रं सदा लिहेत् ।
वर्षैकं मधुनाऽऽज्येन लक्षायुर्जायते नरः ॥ १३० ॥
वलीपलितनिर्मुक्तो महाबलपराक्रमः ।

स्वर्णवैक्रान्तबद्धरसः ।

स्वर्णं वैक्रान्तसत्त्वं च द्वन्द्वितं जारयेद्रसे ॥ १३१ ॥
समांशं तु भवेद्यावत्ततस्तेनैव सारयेत् ।
समेन जायते बद्धो धारयेत्तं मुखे सदा ॥ १३२ ॥
संवत्सरप्रयोगेण जराकालापमृत्युजित् ।
कुमार्या दलजं द्रावं सितायुक्तं पिबेदनु ॥ १३३ ॥
स्वर्णवैक्रान्तबद्धोऽयं ब्रह्मायुर्यच्छते नृणाम् ।

वैक्रान्तवटिका ।

वैक्रान्तसत्त्वतुल्यांशं शुद्धसूतं विमर्दयेत् ॥ १३४ ॥
दिनं दिव्यौषधद्रावैस्तद्गोलं निगडेन वै ।
लिप्त्वा लवणगर्भायां वज्रमूष्यां निरोधयेत् ॥ १३५ ॥
छायायां शोषयेत्सन्धिं त्रिदिनं तुषवह्निना ।
स्वेदयेद्वा करीषाग्नौ दिवारात्रमथोद्धरेत् ॥ १३६ ॥
तद्गोलं निगडेनैव लिप्त्वा तद्वन्निरुध्य च ।
छायाशुष्कं धमेद्गाढं बन्धमायाति निश्चितम् ॥ १३७ ॥
वर्षैकं धारयेद्वक्त्रे जीवेद्ब्रह्मदिनत्रयम् ।
वैक्रान्तगुटिका ह्येषा सर्वकामफलप्रदा ॥ १३८ ॥
कर्षैकं त्रिफलाचूर्णं मध्वाज्याभ्यां लिहेदनु ।

---

१ 'जारयेत्' ख. ।



दिव्यखेचरीगुटिका ।

हेम्ना यद्वद्वन्द्वितं वज्रं कुर्यात्तत्सूक्ष्मचूर्णितम् ॥ १३९ ॥
एतद्देयं गुह्यसूते मूषायामधरोत्तरम् ।
पादमात्रं प्रयत्नेन रुद्ध्वा सन्धिं विशोषयेत् ॥ १४० ॥
भूधराख्ये दिनं पच्यात्समुद्धृत्याथ मर्दयेत् ।
दिव्यौषधफलद्रावैस्तप्तखल्वे दिनावधि ॥ १४१ ॥
रुद्ध्वाऽथ भूधरे पच्याद्दिनं लघुपुटैः पुटेत् ।
समुद्धृत्य पुनस्तद्वन्मर्द्यं रुद्ध्वा दिनत्रयम् ॥ १४२ ॥
तुषाग्निना शनैः स्वेद्यमूर्ध्वाधः परिवर्तयन् ।
जायते भस्मसूतोऽयं सर्वयोगेषु योजयेत् ॥ १४३ ॥
द्रुतसूतस्य भागैकं भागैकं पूर्वभस्मकम् ।
शुद्धनागस्य भागैकं सर्वमम्लेन मर्दयेत् ॥ १४४ ॥
अन्धमूषागतं ध्माप्यं खोटो भवति तद्रसः ।
धमेत्प्रकटमूषायां यावन्नागक्षयो भवेत् ॥ १४५ ॥
द्रुतसूतप्रकारेण द्रावयित्वा त्विमं रसम् ।
निक्षिपेत्कच्छपे यन्त्रे बिडं दत्त्वा दशांशतः ॥ १४६ ॥
स्वर्णादिसर्वलोहानि क्रमेणैव च जारयेत् ।
प्रत्येकं षड्गुणं पश्चाद्वज्रद्वन्द्वं च जारयेत् ॥ १४७ ॥
त्रिगुणं तु भवेद्यावत्ततो रत्नानि वै क्रमात् ।
जारयेद्द्रावितान्येव प्रत्येकं त्रिगुणं शनैः ॥ १४८ ॥
ततो यन्त्रात्समुद्धृत्य दिव्यौषधद्रवैर्दिनम् ।
मर्द्यं रुद्ध्वा धमेद्गाढं जायते गुटिका शुभा ॥ १४९ ॥
पूजयेदङ्कुशीमन्त्रैर्नाम्नेयं दिव्यखेचरी ।
यस्य वक्त्रे स्थिता ह्येषा स भवेद्भैरवोपमः ॥ १५० ॥
दिव्यतेजा महाकायः खेचरत्वेन गच्छति ।
यत्रेच्छा तत्र तत्रैव क्रीडते ह्यङ्गनादिभिः ॥ १५१ ॥
महाकल्पान्तपर्यन्तं तिष्ठत्येव न संशयः ।
तस्य मूत्रपुरीषाभ्यां ताम्रं भवति काञ्चनम् ॥ १५२ ॥
पलाशपुष्पचूर्णं तु तिलाः कृष्णाः सशर्कराः ।

सर्वं फलत्रयं खादेन्नित्यं स्यात् क्रामणे हितम् ॥ १५३ ॥

प्रचण्डखेचरीगुटिका ।

चूर्णमश्वखुरस्यैव गुह्यसूते समं क्षिपेत् ।
त्रिदिनं मातुलुङ्गाम्लैस्ततस्सर्वं मर्दयेद् दृढम् ॥ १५४ ॥
सूततुल्यं मृतं वज्रं तस्मिन् क्षिप्त्वाऽथ मर्दयेत् ।
तप्तखल्वे दिनं चाम्लैस्तद्गोलं चान्धितं पुटेत् ॥ १५५ ॥
दिनैकं भूधरे यन्त्रे भागैकं पूर्वपारदम् ।
क्षिप्त्वा तस्मिन् दृढं मर्द्यं मातुलुङ्गद्रवैर्दिनम् ॥ १५६ ॥
रुद्ध्वाऽथ पूर्ववत्पच्यात्पुनर्देयश्च पारदः ।
मर्द्यं पाच्यं यथापूर्वमेवं कुर्याच्च सप्तधा ॥ १५७ ॥
रसं पुनः पुनर्दत्त्वा स्यादेवं भस्मसूतकः ।
योजयेत्सर्वयोगेषु जरामृत्युहरो भवेत् ॥ १५८ ॥
भागैकं नागचूर्णस्य भागैकं पूर्वभस्मनः ।
द्रुतसूतस्य भागैकं खोटं कुर्याच्च पूर्ववत् ॥ १५९ ॥
तद्वद्धाम्यं गते नागे [1]द्रावितं जारयेत्पुनः ।
पूर्वल्लोहरत्नान्तं जीर्णे बद्धा स्थिता मुखे ॥ १६० ॥
प्रचण्डखेचरी नाम्नी गुटिका खे गतिप्रदा ।
पूर्ववल्लभते वीरः फलमत्यन्तदुर्लभम् ॥ १६१ ॥
निर्गुण्डीमूलचूर्णं तु कर्षं तक्रैः पिबेदनु ।

कङ्कालखेचरीगुटिका ।

शुद्धसूतस्य दातव्यं कलांशं मृतवज्रकम् ॥ १६२ ॥
तत्सर्वमम्लवर्गेण तप्तखल्वे दिनत्रयम् ।
मर्दयित्वा ततस्तेन लेपयेत्सप्तभागतः ॥ १६३ ॥
पक्वबीजस्य पत्राणि तानि भानुदलैः पुनः ।
वेष्टितानि निरुध्याथ निखनेच्चुल्लिगर्भतः ॥ १६४ ॥
आच्छाद्य ज्वालयेत्तत्र काष्ठाग्निं दिवसत्रयम् ।
उद्धृत्य द्वन्द्वलिप्तायां मूषायां तं निरोधयेत् ॥ १६५ ॥
करीषाग्नौ पुटे पच्यादहोरात्रात्समुद्धरेत् ।

१ 'जारितं द्रावयेत्पुनः' ख. ।

वासनामुखिते सूते तुल्यमेतद्विनिक्षिपेत् ॥ १६६ ॥
अम्लेन मर्दयेद्यामं जातं गोलं समुद्धरेत् ।
क्षिपेज्जम्बीरगर्भे तं वस्त्रे बद्ध्वा त्र्यहं पचेत् ॥ १६७ ॥
दोलायन्त्रे सारनाले जायते गुटिका शुभा ।
कङ्कालखेचरी नाम्ना वक्त्रस्था मृत्युनाशिनी ॥ १६८ ॥
वर्षैकं धारयेद्यस्तु स जीवेद्ब्रह्मणो दिनम् ।
गन्धकं गुग्गुलुं तुल्यमाज्यैः कर्षं लिहेदनु ॥ १६९ ॥

कालविध्वंसिका वटिका ।

कृष्णाभ्रकस्य सत्त्वं तु कान्तमाक्षीककाञ्चनम् ।
तीक्ष्णं सौवीरचूर्णं च तुल्यं रुद्ध्वा धमेद् दृढम् ॥ १७० ॥
तत्खोटं सूक्ष्मचूर्णं तु द्रुतसूतसमं भवेत् ।
सूतार्धं मारितं वज्रं सर्वमम्लेन मर्दयेत् ॥ १७१ ॥
दिनैकं तप्तखल्वे तु तं रुद्ध्वा भूधरे पचेत् ।
अहोरात्रात्समुद्धृत्य तत्समं पूर्वसूतकम् ॥ १७२ ॥
दत्वा दिव्यौषधद्रावैर्मर्द्यं सर्वं दिनावधि ।
पूर्ववद्भूधरे पच्याद्द्रुतसूतं पुनः समम् ॥ १७३ ॥
दत्त्वा मर्द्यं पुनः पच्यादित्येवं सप्तवारकम् ।
एतद्भस्मसमं गन्धं दत्वा चान्ध्यं धमेद् दृढम् ॥ १७४ ॥
जायते गुटिका दिव्या कालविध्वंसिका परा ।
यस्य वक्त्रे स्थिता ह्येषा तस्य कालः करोति किम् ॥ १७५ ॥
वर्षषट्कप्रयोगेण जीवेत्कल्पसहस्रकम् ।
तद्गात्रस्वेदमात्रेण सर्वलोहानि काञ्चनम् ॥ १७६ ॥
जायन्ते नात्र सन्देहः शिवाम्बु क्रामकं पिबेत् ।

पञ्चानना गुटिका ।

स्वर्णतारार्ककान्तं च तीक्ष्णचूर्णं समं समम् ॥ १७७ ॥
द्वन्द्वमेलापलिप्तायां मूषायां चान्धितं धमेत् ।
तत्खोटं चूर्णितं कृत्वा चाभिषिक्तं तु पूर्ववत् ॥ १७८ ॥
समुखे जारयेत्सूते यावत्पञ्चगुणं क्रमात् ।
दिव्यौषधद्रवैस्तं वै मर्दयेद्दिवसत्रयम् ॥ १७९ ॥

अन्धमूषागतं ध्मातं जायते गुटिका शुभा ।
नाम्ना पञ्चानना धार्या वक्त्रे संवत्सरावधि ॥ १८० ॥
वलीपलितनिर्मुक्तो जीवेच्चन्द्रार्कतारकम् ।
हस्तिकर्णी समूला तु चूर्ण्या मध्वाज्यसंयुता ॥ १८१ ॥
स्निग्धभाण्डे तु तां रुद्ध्वा धान्यराशौ निवेशयेत् ।
त्रिसप्ताहात्समुद्धृत्य पलैकं भक्षयेदनु ॥ १८२ ॥

शतवेधिकादिगुटिकाः ।

ऋद्धिखण्डे[1] तु यत्प्रोक्तं विविधं रसबन्धनम् ।
अत्र तस्यैव वक्ष्यामि देहवेधक्रमं यथा[2] ॥ १८३ ॥
जारितैर्बन्धितैस्तैस्तै रसराजैः पृथक्पृथक् ।
कारयेद्गुटिकां दिव्या बदराण्डप्रमाणकाम् ॥ १८४ ॥
सा धार्या वत्सरं वक्त्रे स्वानुरूपफलप्रदा ।
गुटिका शतवेधी स्याद्युगायुष्यकरी नृणाम् ॥ १८५ ॥
सहस्रवेधी गुटिका अष्टकल्पान्तरक्षिका ।
लक्षवेधकरी या तु सा दत्ते विष्णुवद्बलम् ॥ १८६ ॥
वेधिका दशलक्षे या सा रुद्रपददायिनी ।
कोटिवेधकरी या सा ईश्वरत्वकरी नृणाम् ॥ १८७ ॥
वेधिका दशकोटीनां सा सदाख्यपदप्रदा ।
गुटिकाऽर्बुदवेधी या सा श्रीकण्ठपदप्रदा ॥ १८८ ॥
सम्यग्भवपदं दत्ते गुटिका शङ्खवेधिका ।
धूम्रवेधी तु या सिद्धा सा शक्तिपददायिनी ॥ १८९ ॥
पराशक्तिपदं दत्ते स्पर्शवेधकरी तु या ।
शब्दवेधकरा या तु सा यस्य वत्सरावधि ॥ १९० ॥
वक्त्रे स्थिता स वै सिद्धो नित्यं नित्यपदं लभेत् ।
स्वेच्छाचारी वज्रकायो वज्रपातैर्न भिद्यते ॥ १९१ ॥
तस्य मूत्रपुरीषाभ्यां सर्वलोहानि काञ्चनम् ।
जायन्ते स्वेदसम्पर्काद्गात्रसंस्पर्शनादपि ॥ १९२ ॥
सर्वेषामुक्तयोगानामनु स्याच्छुद्धगन्धकम् ।

१ ऋद्धिखण्डे इति वादिखण्डे इत्यर्थः । २ 'तथा' ख.



पलार्धं भक्षयेन्नित्यं रससङ्क्रामणे हितम् ॥ १९३ ॥
कालि[2] कालि महाकालि मांसशोणितभोजिनि ।
रक्तकृष्णमुखे देवि रससिद्धिं ददस्व मे ॥ १९४ ॥ स्वाहा
अनेन सिद्धमन्त्रेण शक्तिचक्रं प्रपूजयेत् ।
कालिकां भैरवं सिद्धान् कुमारीं साधितं रसम् ॥ १९५ ॥
ततो रसायनं दिव्यं सेवयेत् सिद्धिमाप्नुयात् ।
गुटिकां धारयेद्वक्त्रे पूर्वमन्त्रं जपेत्सदा ॥ १९६ ॥
रसमन्त्रप्रयोगेण शीघ्रं सिद्धिमवाप्नुयात् ।

कालान्तरसासिद्धिकरणप्रकारः ।

कालान्तरससिद्धिर्या प्रोक्ता मन्थानभैरवे ॥ १९७ ॥
तदर्थं पञ्च तत्त्वानि षष्ठं जीवं च साधयेत् ।
काकिन्याः पुष्पकाले तु सङ्गं कृत्वा समाहरेत् ॥ १९८ ॥
तद्योनिस्थं रजोबीजं गगनं तं विदुर्बुधाः ।
काकिन्युत्पन्नपुत्रस्य सद्योविड्वायुरुच्यते ॥ १९९ ॥
तेजस्तु काकिनीपुष्पं जलं तत्पुत्रशोणितम् ।
काकिनीपुत्रसर्वाङ्गं पृथिवीतत्त्वमुच्यते ॥ २०० ॥
रससेवकदेहोत्थवीर्यं जीवस्तु कथ्यते ।
तत्प्रत्येकं कोटिवेधं कर्षैकं रससंयुतम् ॥ २०१ ॥
कृत्वा संरक्षयेद्भिन्नं सुपिष्टं गोलकीकृतम् ।
उन्नतं पौरुषं यावद्विस्तारेण तदर्धकम् ॥ २०२ ॥
कुर्यात्ताम्रकटाहं तु स्थूलं यावत षडङ्गुलम् ।
चतुर्मुखस्य कोष्ठस्य पृष्ठे धार्यं दृढं यथा ॥ २०३ ॥
गोघृतं नरतैलं च समभागेन मेलयेत् ।
तेनापूर्य कटाहं तं सिद्धचक्रं ततोऽर्चयेत् ॥ २०४ ॥
कुमारीगुरुदेवाग्नीन् भैरवं भैरवीयुतम् ।
तर्पयेद्बलिमांसेन क्षेत्रपालं च पूजयेत् ॥ २०५ ॥
धमनं तत्र कुर्वीत चतुर्दिक्षु शनैः शनैः ।
चतुर्भिर्वङ्कनालैश्च खदिराङ्गारयोगतः ॥ २०६ ॥

२ अस्याग्रे 'ऐं ह्रीं श्रीं श्रीं' इत्यधिकं ख. पुस्तके ।

सुतप्तं फेननिर्मुक्तं निर्धूमं च यदा भवेत्।
चन्द्रार्कग्रहनक्षत्रदेवताभुवनानि च ॥ २०७ ॥
नमस्कृत्य गुरुं देवं देहं तत्र विनिक्षिपेत्।
सुद्रुतं तं विजानीयान्निक्षिपेत्पार्थिवं रसम् ॥ २०८ ॥
धमन्नत्रैव यत्नेन यावत्तत्त्वैकतां व्रजेत्।
अप्तत्त्वाख्यं रसं तस्मिन् क्षिपेद्रक्तं भवेत्तु तत् ॥ २०९ ॥
वायुयुक्तं रसं क्षिप्त्वा शुभ्रवर्णं प्रजायते।
तेजोयुक्तं रसं क्षिप्याद्धनीभूतं भवेत्तु तत् ॥ २१० ॥
तत आकाशसंयुक्तं रसं तत्र विनिक्षिपेत्।
आवर्तितं सुवर्णाभं जायते तत्र निक्षिपेत् ॥ २११ ॥
जीवयुक्तं रसं दिव्यं ततो हुङ्कारमुच्चरेत्।
कृत्वा तत्र महारावं हुङ्कारत्रयसंयुतम् ॥ २१२ ॥
ततश्चोत्तिष्ठते सिद्धः पूर्वाह्ने भास्करो यथा।
दिव्यतेजा महाकायो महाबलपराक्रमः ॥ २१३ ॥
नवनागसहस्राणां बलं तस्याधिकं भवेत्।
जीवते वज्रदेहः सन् सत्यं सत्यं शिवोदितम् ॥ २१४ ॥
जराजर्जरिताङ्गानामन्धानां पङ्गुकुष्ठिनाम्।
नष्टवाग्जडषण्डानां कुब्जानां कुष्ठदेहिनाम् ॥ २१५ ॥
अनेकव्याधियुक्तानां भ्रान्तोन्मत्तपिशाचिनाम्।
किं पुनः स्वच्छदेहानां भूपानां रससेविनाम् ॥ २१६ ॥
वीराणां साधकानां च दिव्यसिद्धिप्रदो भवेत्।
तस्माद्वीरतरो योऽत्र भैरवोऽसौ न संशयः ॥ २१७ ॥
वज्रकायो भवेत्सिद्धो मेधावी दिव्यरूपवान्।
अर्धयोजनविस्तीर्णं विमानं चाप्सरोयुतम् ॥ २१८ ॥
आयाति नात्र सन्देहस्तस्य सिद्धस्य सम्मुखम्।
तत्रारूढो रुद्रलोके क्रीडते भैरवो यथा ॥ २१९ ॥
क्षुत्पिपासाविनिर्मुक्तो जगन्नाशे न नश्यति।
भुञ्जानः सर्वभोगांश्च योगिनां स प्रियो[१] भवेत्।

१ 'योगिनीनां' ख.।



इच्छासिद्धो महावीरो नित्यानन्दमयो भवेत् ॥ २२० ॥
दृष्ट्वा समस्तमनुभूय रसायनेषु
सारातिसारसुखसाध्यतरं नराणाम्।
देहस्य दार्ढ्यकरणे गुटिकाप्रयोगाः
प्रोक्ताः परं शिवकराः सततं सुसिद्ध्यै ॥ २२१ ॥

इति पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरे रसायनखण्डे गुटिकारसायनं नाम तृतीयोपदेशः।

---

## अथ चतुर्थोपदेशः।

सूतगन्धगगनायसशुल्बं मारितं च परमामृतीकृतम्।
इष्टमेकमपि मूलिकागणं देहसिद्धिकरमाशु सेवितम् ॥ १ ॥

कान्तादिमहारसायनम्।

मृतकान्ताभ्रकं सूतं गन्धं भृङ्गविडङ्गकम्।
त्वग्वर्जं बिल्वबीजं च प्रत्येकं पलषोडश ॥ २ ॥
त्रिंशत्पलं त्र्यूषणं च त्रिंशत्त्रिंशद्घृतं मधु।
चित्रमूलं दशपलं सर्वं चूर्णं विलोडयेत् ॥ ३ ॥
पलानि त्रिफलायास्तु विंशपूर्वं चतुःशतम्।
क्वाथ्यमष्टगुणैस्तोयैर्ग्राह्यमष्टावशेषितम् ॥ ४ ॥
कषायं भावयेत्तेन मासैकं पूर्वलोडितम्।
लोहपात्रे खरे घर्मे तत्पलार्धं सदा पिबेत् ॥ ५ ॥
क्षीरैः शयनकाले तु वर्षान्मृत्युजरापहम्।
बालो निबिडसन्धिश्च जीवेच्चन्द्रार्कतारकम् ॥ ६ ॥
महारसायनं दिव्यं कामिनीशततोषकम्।

रसायना अभ्रकयोगाः।

अग्निवर्णं क्षिपेत्क्षीरे कृष्णाभ्रं वह्नितापितम् ॥ ७ ॥
भिन्नपत्रं ततः कृत्वा जलमध्ये विनिक्षिपेत्।
त्रिंशत्पलानि यत्नेन मरिचं पलपञ्चकम् ॥ ८ ॥
चूर्णितं निक्षिपेत्तस्मिंस्त्रिदिनान्ते समुद्धरेत्।

तत्सर्वं पेषयेच्छ्लक्ष्णं सितवस्त्रेण बन्धयेत् ॥ ९ ॥
जलपूर्णे घटे घर्मे दोलायन्त्रेण धारयेत् ।
शुष्के तोये पुनस्तोयं दद्याद्यावज्जले गतम् ॥ १० ॥
तदभ्रकं ततो वस्त्रं सन्त्यजेद्रक्षयेज्जलम् ।
त्रिंशद्भागं ततः कुर्यात्तज्जलं साभ्रकं सुधीः ॥ ११ ॥
तद्भागैकेन संलोड्य पलैकं श्वेततण्डुलात् ।
त्रिंशत्पले गवां क्षीरे तत् पचेच्चाथ शीतलम् ॥ १२ ॥
मध्वाज्यैर्द्विपलैर्युक्तं निष्कैकैश्च मरीचकैः ।
साधको भक्षयेन्नित्यं मासान्मृत्युजरापहम् ॥ १३ ॥
केशा दन्ता नखास्तस्य पतन्ति ह्युद्भवन्ति च ।
वज्रकायो भवेत्सिद्धो[1] वायुवेगो महाबलः ॥ १४ ॥
अमृताभ्रकयोगोऽयं शम्भुना गदितः पुरा ।
मृताभ्रं गन्धकं शुद्धं कणा सत्र समं घृतैः ॥ १५ ॥
कर्षैकं भक्षयेन्नित्यं वर्षान्मृत्युजरापहम् ।
कोरण्टकस्य पत्राणि मृताभ्रं गन्धकं समम् ॥ १६ ॥
तत्सर्वं नीलिकाद्रावैः सप्ताहं भाव्यमातपे ।
तत्कर्षैकं पिबेत्क्षीरैरब्दान्मृत्युजरापहम् ॥ १७ ॥
मृताभ्रकस्य कर्षैकं गवां क्षीरं पलं तथा ।
समूलपत्रां सर्पाक्षीं सार्द्रां[2] पिष्ट्वा च गन्धकम्[3] ॥ १८ ॥
एकीकृत्य पिबेत्सर्वं वर्षैकेन जरां जयेत् ।
वज्रकायः खेचरश्च जीवेद्ब्रह्मदिनत्रयम् ॥ १९ ॥
मृताभ्रं कान्तलोहं च त्रिफला मागधी समम् ।
पञ्चाङ्गं बदरीचूर्णमभ्रतुल्यं नियोजयेत् ॥ २० ॥
सितामध्वाज्यसंयुक्तं पलार्धं भक्षयेत्सदा ।
हन्ति वर्षाज्जरां मृत्युमायुः स्याद्ब्रह्मणो दिनम् ॥ २१ ॥

'अमृतक्रीडे विष्णुमंचरणि स्वाहा ॥' अनेन मन्त्रेण सर्वे अभ्रकयोगा अभिमन्त्र्य भक्षणीयाः ।

---

१ महासिद्धो' ख. । २ 'सार्द्रैः' ख. । ३ 'कर्षकम् ख. ।



रसायनाः कान्तयोगाः ।

मृतं कान्तं तिलाः कृष्णा बदरीफलचूर्णकम् ।
काकतुण्डीबीजचूर्णं सर्वं तुल्यं प्रकल्पयेत् ॥ २२ ॥
शाल्मलीमल्लिपत्राणां द्रवैर्भाव्यं दिनत्रयम् ।
त्रिदिनं भृङ्गजैर्द्रावैर्भावितं शोषयेत्पुनः ॥ २३ ॥
तस्मितुल्यं गुडं क्षिप्त्वा वटिकाः कर्षमात्रकाः ।
रुदन्त्युत्थद्रवैः क्षीरैर्मध्वाज्याभ्यां पिबेत्सदा ॥ २४ ॥
वर्षैकेन जरां मृत्युं हन्ति सत्यं न संशयः ।
मृतं कान्तं कृष्णतिलांस्त्रिफलां चूर्णयेत्समम् ॥ २५ ॥
शाल्मलीकेतकीद्रावैर्लोडितं कान्तपात्रके ।
स्थितं रात्रौ पिबेत्प्रातः पलार्धं मृत्युनाशनम् ॥ २६ ॥
वत्सरैकाज्जरां हन्ति जीवेद्ब्रह्मदिनत्रयम् ।
कान्तभस्म कणाचूर्णं निम्बनिर्यासमेव च ॥ २७ ॥
त्रिफलातुल्यतुल्यांशं मध्वाज्याभ्यां पलार्धकम् ।
लिहेन्मासाष्टकं नित्यं जीवेद्ब्रह्मदिनं नरः ॥ २८ ॥

कुष्ठखण्डानि सम्पाच्य कषाये त्रैफले समे ।
शोषयित्वा विचूर्ण्याथ तानि कान्तं मृतं समम् ॥ २९ ॥
मध्वाज्याभ्यां लिहेत्कर्षं वर्षान्मृत्युजरापहम् ।
कोरण्टपत्रचूर्णं तु कान्तभस्म तिला गुडम् ॥ ३० ॥
तुल्यं भक्ष्यं पलार्धं तद्वर्षान्मृत्युजरापहम् ।
कान्तभस्म समं गन्धं तैलैर्ज्योतिष्मतीभवैः ॥ ३१ ॥
लिहेन्नित्यं चतुर्निष्कं ब्रह्मायुर्जायते नरः ।
बृहस्पतिसमो वाचा वत्सराद्भवति ध्रुवम् ॥ ३२ ॥
मृततीक्ष्णं त्रयो भागाः शुद्धगन्धाष्टभागकम् ।
घर्मे भाव्यं त्रिसप्ताहं तत्सर्वं कन्यकाद्रवैः ॥ ३३ ॥
गोक्षीरैस्तत्पिबेत्कर्षं जीवेद्ब्रह्मदिनत्रयम् ।
वर्षमात्रान्न सन्देहो दिव्यतेजा महाबलः ॥ ३४ ॥
मृतं कान्तं शिला शुद्धा तुल्यं मध्वाज्यकैर्लिहेत् ।
निष्कं निष्कं तु वर्षैकं जीवेद्ब्रह्मदिनत्रयम् ॥ ३५ ॥

त्रिनिष्कं मृततीक्ष्णं तु मुण्डं वा कान्तमेव वा।
पिबेद्धारोष्णपयसा वयःस्तम्भकरं नृणाम् ॥ ३६ ॥
वर्षद्वय[1]प्रयोगेण जीवेदाचन्द्रतारकम् ।
सम्यक्कान्तमये पात्रे धात्रीचूर्णं शिवाम्बुना ॥ ३७ ॥
रात्रौ पलैकं संलिप्य प्रातरुत्थाय भक्षयेत् ।
वलीपलितनिर्मुक्तो वत्सरान्मृत्युजिद्भवेत् ॥ ३८ ॥
लेपयेत्कान्तपात्रान्तः पलैकं त्रिफलामधु ।
दिवारात्रं स्थितं पेयं तन्नित्यं तु शिवाम्बुना ।
वर्षान्मृत्युं जरां हन्ति जीवेद्वर्षशतत्रयम् ॥ ३९ ॥

ॐ हः अमृते अमृतशक्ति अमृतगन्धोपजीवि निष्पन्नं चन्द्रामृतं आज्ञापितं कुरु कुरु स्वाहा हे हे हं हः गम्' इति गन्धकलोहयोर्भक्षणमन्त्रः ॥

सर्वेषां लोहयोगानामनु स्यात्क्षीरपानकम् ।
आस्वादेत्स्वादुमुस्तानां स्वरसं दन्तपीडितम् ॥ ४० ॥
मूलानि भक्षयेत्तासामास्यवैरस्यशान्तये ।
बद्धे कोष्ठे तु दीप्ताग्नौ तप्तं क्षीरं पिबेत्सदा ॥ ४१ ॥
स्नानमर्दनतीक्ष्णोष्णं विष्टम्भे सति वर्जयेत् ।
ताम्बूलं भक्षयेन्नित्यं सकर्पूरं मुहुर्मुहुः ॥ ४२ ॥
सम्यग्जीर्णे तु दीप्ताग्नौ पिबेत्पश्चाद्बुभुक्षितः ।
शृतं क्षीरं ततोऽन्नं च सेव्यं लौहरसायने ॥ ४३ ॥

ब्रह्मवृक्षकल्पः ।

ब्रह्मवृक्षस्य पञ्चाङ्गं छायाशुष्कं सुचूर्णितम् ।
मध्वाज्याभ्यां लिहेत्कर्षं वर्षैकेन जरां जयेत् ॥ ४४ ॥
जीवेद्वर्षसहस्रैकं दिव्यतेजा महाबलः।
ब्रह्मवृक्षस्य पुष्पाणि छायाशुष्काणि कारयेत् ॥ ४५ ॥
त्रिंशत्पलं तु तच्चूर्णं चतुर्विंशत्पलं घृतम् ।
एकीकृत्य क्षिपेद्भाण्डे तं रुद्ध्वा धान्यराशिगम् ॥ ४६ ॥
कृत्वा मासात्समुद्धृत्य भागान् कुर्याच्चतुर्दश ।

१ 'वर्षत्रयप्रयोगेण' ख.।



भागैकं भक्षयेन्नित्यं भुञ्जीत कान्तभाजने ॥ ४७ ॥
एवं मासत्रयं कुर्याद्वज्रकायो भवेन्नरः[1] ।
तस्य मूत्रपुरीषाभ्यां ताम्रमायाति काञ्चनम् ॥ ४८ ॥
ब्रह्मवृक्षस्य बीजानि चूर्णितानि घृतैः सह ।
पूर्ववद्धान्यमध्ये तु क्षिप्त्वा मासात्समुद्धरेत् ॥ ४९ ॥
पलैकैकं सदा खादेद्वत्सरान्मृत्युजिद्भवेत् ।
वलीपलितनिर्मुक्तो जीवेद्ब्रह्मदिनत्रयम् ॥ ५० ॥
ब्रह्मबीजोत्थितं तैलं गवां क्षीरैः पलद्वयम् ।
तुल्यैः पिबेद्भवेन्मूर्च्छा सिञ्चेत्तस्य मुखे पयः ॥ ५१ ॥
बोधे क्षीरौदनं दद्यान्मासाज्ज्ञानी भवेन्नरः ।
द्वितीये शुक्रतुल्यः स्यात्तृतीये वज्रवद्भवेत् ॥ ५२ ॥
दूरश्रावी चतुर्थे तु पञ्चमे खेगतिर्भवेत् ।
मासषट्के स्वयं कर्ता शिवतुल्यपराक्रमः ॥ ५३ ॥
महाकल्पान्तपर्यन्तं जीवेद्वर्षैकसेवनात् ।
ब्रह्मवृक्षमतिस्थूलं छेदयेदूर्ध्वभागतः ॥ ५४ ॥
अधो रक्ष्यं त्रिहस्तं स्यात्तस्य मूर्ध्नि बिलं कृतम् ।
पक्व[2]धात्रीफलैः पूर्यं तत्काष्ठेन निरुध्य च ॥ ५५ ॥
कुशैस्तु वेष्टयेत्सर्वं लेप्यं मृद्गोमयैः पुनः ।
आवेष्ट्य वस्त्रखण्डेन लिम्पेन्मृद्गोमयैस्ततः ॥ ५६ ॥
शुष्के गजपुटं देयं पैरितोऽरण्यकोत्पलैः ।
स्वाङ्गशीतलमुद्धृत्य सद्रवाणि फलानि च ॥ ५७ ॥
क्षिपेन्मध्वाज्यसंयुक्ते भाण्डे तान्येव भक्षयेत् ।
यथेष्टं भूगृहान्तस्थः क्षीराहारी जरां जयेत् ॥ ५८ ॥
[4]मासद्वयेन वसुधां छिद्रां पश्यति निश्चितम् ।
जीवेद्ब्रह्मदिनं यावत्सर्पवत्कञ्चुकं त्यजेत् ॥ ५९ ॥

श्वेतपालाशकल्पः ।

श्वेतपालाशपञ्चाङ्गं चूर्णितं मधुना सह ।

१ 'महाबलः' ख. । २ 'तं तु धात्रीफलैः' ख. ।
३ 'पाचितो' ख. । ४ 'छिद्रं पश्यति मासाद्वै निधानानि च भूतले' ख.।

कर्षैकं भक्षयेन्नित्यं मासान्मृत्युजरापहम् ॥ ६० ॥
ब्रह्मायुर्जायते सिद्धो वर्षमात्रान्न संशयः ।
अजाघृतेन तद्बीजमेकैकं भक्षयेत्सदा ॥ ६१ ॥
शरीरं भस्मना मर्द्यं मासान्मृत्युजरां जयेत् ।
जीवेद्ब्रह्मदिनं यावद्दिव्यकायो भवेन्नरः ॥ ६२ ॥
अन्ये योगा यथा रक्ते ब्रह्मवृक्षे च ये गुणाः ।
तथैव श्वेतपालाशे भवेयुः साधकस्य वै ॥ ६३ ॥

'अमृतं कुरु कुरु अमृतमालिन्यै नमः ॥' अनेन मन्त्रेण सर्वयोगा सप्ताभिमन्त्रिता भक्षणीयाः ।

मुण्डीकल्पः ।

शुक्लपक्षेऽथ पूर्णायां पुष्ये वा श्रवणे तथा ।
रेवत्यां वाऽथ सम्पूज्य मुण्डीपञ्चाङ्गमुद्धरेत् ॥ ६४ ॥
छायाशुष्कं तु तच्चूर्णं कर्षं गोपयसा सह ।
वर्षैकेन जरां हन्ति जीवेद्वर्षशतत्रयम् ॥ ६५ ॥
तस्य मूत्रपुरीषाभ्यां ताम्रं सौवर्णतां व्रजेत् ।
तच्चूर्णं तु घृतैर्लेह्यं तद्वत्स्याद्बलमद्भुतम् ॥ ६६ ॥

'ॐ नमोऽमृतोद्भवाय अमृतं कुरु कुरु स्वाहा ओ ह्रां सः ॥' इति औषधभक्षणमन्त्रः ।

देवदालीकल्पः ।

छायाशुष्कं देवदालीपञ्चाङ्ग चूर्णयेत्ततः ।
मध्वाज्याभ्यां लिहेत्कर्षं वर्षान्मृत्युजरां जयेत् ॥ ६७ ॥
जीवेत्कल्पसहस्रं तु रुद्रतुल्यो भवेन्नरः ।
तच्चूर्णं कर्षमात्रं तु नित्यं पेयं शिवाम्बुना ॥ ६८ ॥
पूर्ववज्जायते सिद्धिर्वत्सरान्नात्र संशयः ।
तच्चूर्णं बाकुचीवह्निसर्पाक्षीभृङ्गराट्समम् ॥ ६९ ॥
चूर्णितं कर्षमात्रं तु नित्यं पेयं शिवाम्बुना ।
वर्षान्मृत्युं जरां हन्ति छिद्रां पश्यति मेदिनीम् ॥ ७० ॥
पुनर्नवादेवदाल्योर्नीरैर्नित्यं पिबेन्नरः ।

१ अयं पाठः ख० पुस्तके नोपलभ्यते ।



देवदाल्याश्च सर्पाक्ष्याः पलैकं वा शिवाम्बुना ॥ ७१ ॥
पिबेत्स्यात्पूर्ववत्सिद्धिर्वत्सरान्नात्र संशयः ।
देवदालीं च निर्गुण्डीं पिबेत्कर्षां शिवाम्बुना ।
वर्षैकेन जरां हन्ति जीवेदाचन्द्रतारकम् ॥ ७२ ॥

ॐ अमृतगण रुद्रगणारम्भः स्वाहा । अयं च ग्रहणमन्त्रः ॥ 'नमो भगवते रुद्राय हुं फट् स्वाहा ।' अयं साधकस्य शिखाबन्धनमन्त्रः ॥ 'ॐ चर र र ।' अयं भक्षणमन्त्रः ॥

श्वेतार्ककल्पः ।

पुष्ये श्वेतार्कमूलं तु ग्राह्यं छायाविशोषितम् ।
चूर्णकर्षं गवां क्षीरैः पलद्वन्द्वैर्युतं पिबेत् ॥ ७३ ॥
मासषट्काज्जरां हन्ति जीवेद्ब्रह्मदिनत्रयम् ।
द्रवं श्वेतार्कपत्राणां भृङ्गराजद्रवैः समम् ॥ ७४ ॥
एकीकृत्यातपे शुष्कं चूर्णं क्षीरैश्चतुर्गुणैः ।
मृदग्निना पचेत्तावद्यावत्पिण्डत्वमागतम् ।
तत्कर्षैकं[1] घृतैर्लेह्यं वर्षात्स्यात्पूर्ववत्फलम् ॥ ७५ ॥

'ॐ आं हं वासरमालिने स्वाहा ।' अयं भक्षणमन्त्रः ॥

हस्तिकर्णकल्पः ।

ग्राह्यं सोमत्रयोदश्यां हस्तिकर्णस्य पत्रकम् ।
छायाशुष्कं तु तच्चूर्णं गवां क्षीरैः पिबेत्पलम् ॥ ७६ ॥
वर्षमात्राज्जरां हन्ति जीवेद्ब्रह्मदिनं नरः ।
हस्तिकर्णस्य पञ्चाङ्गं छायाशुष्कं विचूर्णितम् ॥ ७७ ॥
कर्षमात्रं पिबेन्नित्यं मासैकमुदकैः सह ।
आरनालैस्ततस्तक्रैर्दधिक्षीराज्यक्षौद्रकैः ॥ ७८ ॥
प्रत्येकेन क्रमात्सेव्यं मासैकेन जरापहम् ।
जीवेद्ब्रह्मदिनं सार्धं वज्रकायो महाबलः ॥ ७९ ॥

'ॐ गरविषं दष्टौ गृह्णामि स्वाहा ।' हस्तिकर्णग्रहणमन्त्रः ॥
'ॐ अमृतकुटीजातानां[2] अमृतं कुरु कुरु स्वाहा ।' अनेन पूजयेत् ।
'ॐ अमृतोद्भवाय अमृतं कुरु कुरु नित्यं नमो नमः ।' भक्षणमन्त्रः ॥

१ 'कर्षैक तु' ख. २ 'अमृतकुक्षिजातानां' ख. ।

रुदन्तीकल्पः।

रुदन्त्याश्चैव पञ्चाङ्गं छायाशुष्कं विचूर्णयेत्।
तदर्धं मुशलीचूर्णं मुशल्यर्धं फलत्रयम् ॥ ८० ॥
मूलानां कतकोत्थानां तैलं पातालयन्त्रके।
ग्राहयेद्भैयन्त्रे वा तत्तैलं क्षालयेज्जलैः ॥ ८१ ॥
नालिकेरजलैर्वाऽथ क्षाल्यं पञ्चांशवारकम्।
एतत्तैलेन संयुक्तं पूर्वचूर्णं लिहेत्क्रमात् ॥ ८२ ॥
कर्षादिवर्धनं कार्यं पलान्तं चाथ वर्धयेत्।
एवमब्दाज्जरां हन्ति आयुः स्याद्ब्रह्मणो दिनम् ॥ ८३ ॥
सिद्धयोगो ह्ययं ख्यातो वज्रकायकरो नृणाम्।

निर्गुण्डीकल्पः।

पुष्यार्के ग्राहयेत्प्रातर्निर्गुण्डीमूलजां त्वचम् ॥ ८४ ॥
छायाशुष्कां विचूर्ण्याथ कर्षमेकं पिबेत्सदा।
अजामूत्रपलैकेन षण्मासादमरो भवेत् ॥ ८५ ॥
वर्षमात्रप्रयोगेण शिवतुल्यो भवेन्नरः।
तच्चूर्णं क्षीरमध्वाज्यैर्लोडितं स्निग्धभाण्डके ॥ ८६ ॥
रुद्ध्वा क्षिपेद्धान्यराशौ मासादुद्धृत्य भक्षयेत्।
द्विपलं वर्षपर्यन्तं जीवेच्चन्द्रार्कतारकम् ॥ ८७ ॥
तच्चूर्णार्धपलं चाज्यैर्लिहेत्स्यात्पूर्ववत्फलम्।
तच्चूर्णं त्रिफला मुण्डी भृङ्गी निम्बो गुडूचिका ॥ ८८ ॥
वचा चैषां समं चूर्णं मध्वाज्याभ्यां लिहेत्पलम्।
वर्षान्मृत्युं जरां हन्ति जीवेद्ब्रह्मदिनत्रयम् ॥ ८९ ॥
निर्गुण्डीपत्रजं द्रावं भाण्डे मृद्वग्निना पचेत्।
गुडवत्पाकमापन्नं पीतं वान्तिविरेककृत् ॥ ९० ॥
निर्यान्ति कृमयस्तस्य मुखनासाक्षिकर्णतः।
राजयक्ष्मादिरोगांश्च सप्ताहेन विनाशयेत्।
मासत्रयाज्जरां हन्ति जीवेद्वर्षशतत्रयम् ॥ ९१ ॥
'ॐ नमो माय गणपतये भूपतये कुबेराय स्वाहा' इति भक्षणमन्त्रः॥

१ 'पञ्चांशवासरम्' ख.



रसायनाः कतिपययोगाः।

भल्लातकोऽभया वीरा काकतुण्ड्याः फलं वचा।
लाङ्गली निम्बपत्राणि सहदेवी समं समम् ॥ ९२ ॥
एषां पातालयन्त्रेण तैलं ग्राह्यं प्रयत्नतः।
तत्तैलं नीलिकामूलयुक्तमर्धपलं पिबेत् ॥ ९३ ॥
वत्सरात्पलितं हन्ति आयुः स्याद्ब्रह्मणो दिनम्।
तैलार्धनिष्के तन्नस्ये कृते स्यात्पूर्ववत्फलम् ॥ ९४ ॥
कृष्णजीरकप्रस्थैकं तत्तुल्यं भृङ्गजद्रवम्।
यष्टी नीलोत्पलं चैव प्रति प्रस्थार्धमाहरेत् ॥ ९५ ॥
पादप्रस्थं तिलात्तैलं सर्वमेकत्र पाचयेत्।
ग्राह्यं तैलावशेषं तन्नस्यं तेनैव कारयेत् ॥ ९६ ॥
नस्यं चाङ्कोलतैलेन कुर्यान्मृत्युजरापहम्।
निष्कार्धनिष्कं वर्षैकं जीवेद्वर्षशतत्रयम् ॥ ९७ ॥
काकमाचीफलं पिष्ट्वा कर्षैकमुदकैः पिबेत्।
वत्सरात्पलितं हन्ति आयुः स्याद्ब्रह्मणो दिनम् ॥ ९८ ॥
गुडूची मुशली मुण्डी निर्गुण्डी च शतावरी।
विजया च समं चूर्णं सितामध्वाज्यसंयुतम् ॥ ९९ ॥
खादेत्कर्षद्वयं नित्यं वत्सरात्पलितं जयेत्।
उक्तं गोरक्षनाथेन जीवेद्ब्रह्मदिनत्रयम् ॥ १०० ॥

शुनकशाल्मलिकाकल्पः।

कृष्णाष्टम्यां कृष्णसूत्रैर्वृक्षं शुनकशाल्मलेः।
आवेष्ट्याघोरमन्त्रेण रात्रौ कृष्णाजकं बलिम् ॥ १०१ ॥
दत्वाऽघोरं जपेत्तत्र यावदष्टसहस्रकम्।
तस्य मूलत्वचं ग्राह्यं छायाशुष्कं विचूर्णयेत् ॥ १०२ ॥
मध्वाज्याभ्यां सदा खादेत्पलैकं वत्सरावधि।
वलीपलितनिर्मुक्तो जीवेद्ब्रह्मदिनं नरः ॥ १०३ ॥
तस्य पुष्पाणि सङ्गृह्य गवां क्षीरैः सदा पचेत्।
पुष्पवर्जं पिबेत्क्षीरं मासान्मृत्युजरापहम् ॥ १०४ ॥
फलैकं तस्य वृक्षस्य गवां क्षीरेण पाचयेत्।

फलवर्जं पिबेत्क्षीरं क्षीरमेवं पिबेद्बुधः ॥ १०५ ॥
चतुर्मासप्रयोगेण वज्रकायो भवेन्नरः ।
जीवेत्कल्पान्तपर्यन्तं वायुवेगो महाबलः ॥ १०६ ॥
तस्य मूत्रपुरीषाभ्यां ताम्रं भवति काञ्चनम् ।
काकमाची भृङ्गराजः सर्पाक्षी सहदेविका ॥ १०७ ॥
समूला देवदाली च निम्बबाकुचिबीजकम् ।
फलानि काकतुण्ड्याश्च मूलं ब्रह्माश्वगन्धयोः ॥ १०८ ॥
नीलकोरण्टपत्राणि त्रिफला च समं समम् ।
चूर्णं तत्कन्यकाद्रावैर्भावयेत्सप्तवासरम् ॥ १०९ ॥
छायायां शोषितं कुर्यात्सितामध्वाज्यसंयुतम् ।
भक्षेत्कर्षद्वयं नित्यं वर्षमात्राज्जरां जयेत् ।
जीवेच्चन्द्रार्कनक्षत्रं महाकायो महाबलः ॥ ११० ॥

'ॐ ठः ठः ठः सः सः सः अमृते अमृतवर्षिणि अमृतसञ्जीवनि सर्वकामप्रदे भगवान् सोमराज आज्ञापयति स्वाहा' इति भक्षणमन्त्रः ॥

त्रिफलादियोगः ।

त्रिफला बाकुचीबीजं पिप्पली चाश्वगन्धिका ।
सर्वं तुल्यं कृतं चूर्णं मध्वाज्याभ्यां लिहेत्पलम् ।
वर्षान्मृत्युं जरां हन्ति जीवेद्ब्रह्मदिनत्रयम् ॥ १११ ॥
ॐ ह्रां ह्रीं ह्रूं सः स्वाहा' अनेन मन्त्रेण भक्षयेत् ॥

मूलिकाकल्पेषु पारदयोगः ।

मूलिकाकल्पयोगेषु गुञ्जैकं मृतपारदम् ।
प्रतियोगयुतं खादेत्फलं शतगुणं भवेत् ।
रसेन्द्रस्य प्रभावेण शीघ्रं सिद्धिमवाप्नुयात् ॥ ११२ ॥

रसायनकल्पेषु मन्त्रयोगः ।

अस्थिमुद्राधरो मन्त्री लक्षमेकं श्मशानतः ।
जपेन्महाभयं हन्ति सिद्धिं दत्ते रसायनम् ॥ ११३ ॥
तेन भक्षितमात्रेण जीवेदाचन्द्रतारकम् ।
अजेयो देवदैत्यानां पर्वतानपि चालयेत् ॥ ११४ ॥
'ॐ ह्रीं महाभयेरुम् ।'



रसायनसेवनविधिः ।

प्रातः पुष्यार्कमुख्ये विविधशुभदिने मन्त्रपूजाविधानै-
र्ग्राह्यं दिव्यौषधीनां फलदलकुसुमं मूलपत्रं रसं वा ।
सर्वाङ्गं वाऽथ सिध्यै सकलमभिनवं सेवयेद्ब्रह्मचारी
क्षीरान्नं चोदकान्नं हितमशनमिदं सर्वमन्यद्विवर्ज्यम् ॥ ११५ ॥

इति श्रीपार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते श्रीरसरत्नाकरे रसायनखण्डे नानारसायनं नाम चतुर्थोपदेशः ।

---

## अथ पञ्चमोपदेशः ।

उद्वर्तनं पलितहारि परं नराणां
शोभावहं सुखकरं कचरञ्जनं च ।
वृद्धोपयोगिसुखसाध्यमनेकयुक्त्या
वक्ष्ये सुसिद्धमनुभूतिपथेन दृष्टम् ॥ १ ॥

वलीपलितनाशार्थं पारदाद्युद्वर्तनम् ।

पारदं गन्धकं तुल्यं नारीस्तन्येन मर्दयेत् ।
विष्णुक्रान्ता मेघनादा सर्पाक्षी मुनिमुण्डिका ॥ २ ॥
आसां द्रवैर्दिनं खल्वे मर्दयेत्तत्समुद्धरेत् ।
यवचूर्णं तिलाश्चैव प्रत्येकं रसतुल्यकम् ॥ ३ ॥
क्षिपेत्तस्मिन् घृतैः क्षौद्रैः सर्वमालोड्य रक्षयेत् ।
अनेनोद्वर्तनं सम्यग्वलीपलितनाशनम् ॥ ४ ॥
वत्सराद्दिव्यदेहः स्याज्जीवेद्वर्षसहस्रकम् ।

वलीपलितनाशार्थं वज्रकापालिनीमूलाद्युद्वर्तनम् ।

वज्रकापालिनीमूलं पारदं च समं समम् ॥ ५ ॥
शिवाम्बुना त्र्यहं मर्द्यमुद्वर्तात्पूर्ववत्फलम् ।

वलीपलितनाशार्थं उत्पलाद्युद्वर्तनम् ।

उत्पलानि समूलानि पारदं च समं समम् ॥ ६ ॥

---

१ 'बलकरं' परमं ख. ।

सप्ताहं मर्दयेत्खल्वे स्वकीयेनाशिवाम्बुना।
तेनैव मर्दयेद्गात्रं जायते पूर्ववत्फलम् ॥ ७ ॥

वलीपलितनाशार्थं पारदाद्युद्वर्तनम्।

पारदस्य समांशेन ब्रह्मदण्डीयमूलकम्।
क्षिप्त्वा सप्तदिनं मर्द्यं स्वकीयेनाशिवाम्बुना ॥ ८ ॥
अनेनोद्वर्तयेद्गात्रं जायते पूर्ववत्फलम्।

वलीपलितनाशार्थं गन्धकयोगः।

गन्धकं कटुतैलेन घर्मे भाव्यं दिनावधि ॥ ९ ॥
तत्पलार्धं सदा खादेद्दिव्यकायकरं नृणाम्।
जायते स्वर्णवद्देहो वत्सराद्वलिवर्जितः ॥ १० ॥

रसायनार्थं कुष्ठयोगः।

कुष्ठचूर्णं समध्वाज्यं नित्यं कर्षं लिहेत्तु यः।
वत्सराद्दिव्यदेहः स्याद्गन्धेन शतपुष्पवत् ॥ ११ ॥

पलितनाशार्थं कान्तपाषाणादियोगः।

कान्तपाषाणचूर्णं तु तैलमध्वाज्यसंयुतम्।
काकतुण्डीफलं सर्वं सममेतत्तु कल्पयेत् ॥ १२ ॥
भाण्डे रुद्ध्वा क्षिपेन्मासं धान्यराशावथोद्धरेत्।
अनेन लेपयेच्छीर्षं नस्यं कुर्यादनेन वै ॥ १३ ॥
त्र्यहाद्भ्रमरसङ्काशाः केशाः स्युर्वत्सरार्धकम्।

पलितनाशार्थं सीसकादियोगः।

नागचूर्णपलैकं तु शङ्खचूर्णपलद्वयम् ॥ १४ ॥
पथ्याचूर्णं निष्कमेकं सर्वं पेष्यं दिनावधि।
अम्लदध्ना युतं यत्नात्स्नात्वाऽऽदौ शिरसि क्षिपेत् ॥ १५ ॥
मर्दयेद्घटिकार्धं तु वेष्टयमेरण्डपत्रकैः।
शिरः संवेष्टय वस्त्रेण प्रातः स्नानं समाचरेत् ॥ १६ ॥
इत्येवं त्रिदिनं यत्नात्कृत्वा केशांश्च रञ्जयेत्।

केशरञ्जनार्थं नीलिकादियोगः।

पञ्चाङ्गं नीलिकाभृङ्गत्रिफलालोहचूर्णकम् ॥ १७ ॥
तुल्यं सर्वं कृतं सूक्ष्ममिडामूत्रेण मर्दयेत्।



दिनार्धं तेन कल्केन पूर्ववत्केशरञ्जनम् ॥ १८ ॥

केशरञ्जनार्थं गुञ्जादियोगः।

गुञ्जाबीजं तु त्वग्वर्ज्यं कुष्ठैलादेवदारुकम्।
तुल्यं चूर्णं दिनं भाव्यं भृङ्गराजभवैर्द्रवैः ॥ १९ ॥
सर्वं चतुर्गुणे तैले पाचयेन्मृदुवह्निना।
तेनाभ्यङ्गेन केशानां रञ्जनं भ्रमरोपमम् ॥ २० ॥

केशरञ्जनार्थं हस्तिदन्तादियोगः।

हस्तिदन्तस्य दग्धस्य समं योज्यं रसाञ्जनम्।
अजाक्षीरेण तत्पिष्ट्वा लेपनात्केशरञ्जनम् ॥ २१ ॥

केशरञ्जनार्थं त्रिफलादियोगः।

त्रिफला लोहचूर्णं तु कृष्णमृद्भृङ्गजद्रवम्।
इक्षुदण्डद्रवं चैव मासं भाण्डे निरोधयेत् ॥ २२ ॥
तल्लेपाद्रञ्जयेत्केशान् स्याद्यावन्मासपञ्चकम्।

केशरञ्जनार्थं लोहकिट्टादियोगः।

लोहकिट्टं जपापुष्पं पिष्ट्वा धात्रीफलं समम् ॥ २३ ॥
त्रिदिनं लेपितास्तेन कचाः स्युर्भ्रमरोपमाः।
भृङ्गराजरसप्रस्थं तैलं कृष्णतिलोद्भवम् ॥ २४ ॥
तुल्यं च नीलिकाद्रावं सर्वं यामं विमर्दयेत्।
तल्लेपस्त्रिदिनं कार्यः केशानां रञ्जनं भवेत् ॥ २५ ॥

केशरञ्जनार्थं सिन्दूरादियोगः।

सिन्दूरस्य समं चूर्णं साबुणं च तयोः समम्।
तज्जले पेषितं लेप्यं तत्क्षणात्कचरञ्जनम् ॥ २६ ॥

केशरञ्जनार्थं शतपुष्पादियोगः।

शतपुष्पा काकमाची तिलाः कृष्णाश्च रोचनम्।
दिनं शिवाम्बुना सर्वं मर्दयेल्लोहपात्रके ॥ २७ ॥
तल्लेपं त्रिदिनं कुर्यात्केशानां रञ्जनं भवेत्।

केशरञ्जनार्थं चूर्णादियोगः।

चूर्णं सर्जी यवक्षारं सिद्धार्थं काञ्जिकैः सह ॥ २८ ॥
नागपुष्पाद्रवैर्मर्द्यं तल्लेपाद्रञ्जनं भवेत्।

केशरञ्जनार्थं नील्यादियोगः ।

नीलीपत्राणि कासीसं भृङ्गराजरसं दधि ॥ २९ ॥
लोहचूर्णं समं पिष्ट्वा तल्लेपं केशरञ्जनम् ।

केशरञ्जनार्थं चूर्णादियोगः ।

चूर्णं सिन्दूरमङ्गारं कदलीकन्दसंयुतम् ॥ ३० ॥
लोहपात्रे लोहमुष्ट्या मर्द्यं जम्बीरजैर्द्रवैः ।
दिनैकं च ततो लेप्यं केशानां रञ्जनं भवेत् ॥ ३१ ॥

केशरञ्जनार्थं कुरण्टकपत्रादियोगः ।

कुरण्टकस्य पत्राणि नागमुष्ट्या विमर्दयेत् ।
तल्लेपं त्रिदिनं कुर्याज्जायते केशरञ्जनम् ॥ ३२ ॥

केशरञ्जनार्थमाम्रास्थ्यादियोगः ।

आम्रास्थि त्रिफला भृङ्गी प्रियङ्गुर्मातुलुङ्गकम् ।
निशा नीली मृणालानि नागं लोहं च चूर्णितम् ॥ ३३ ॥
समं कल्कं कान्तपात्रे निम्बतैलेन भावयेत् ।
मासमात्रं ततस्तेन लेपाद्भवति रञ्जनम् ॥ ३४ ॥

केशरञ्जनार्थं काकमाच्यादियोगः ।

काकमाचीयबीजानि समाः कृष्णतिलास्तथा ।
तत्तैलं ग्राहयेद्यन्त्रे तन्नस्यं केशरञ्जनम् ॥ ३५ ॥

केशरञ्जनं घृतम् ।

गोघृतं भृङ्गजं द्रावं मयूरशिखया सह ।
मृद्वग्निना पचेत्तेन स्यान्नस्यं केशरञ्जनम् ॥ ३६ ॥

केशरञ्जनार्थं जपापुष्परसनस्यम् ।

जपापुष्पद्रवं क्षौद्रं कर्षैकं नस्यमाचरेत् ।
सप्ताहाद्रञ्जयेत्केशान् सर्वनस्येष्वयं विधिः ॥ ३७ ॥

केशरञ्जनार्थं त्रिफलादितैलम् ।

त्रिफला लोहचूर्णं तु वारिणा पेषयेत्समम् ।
तत्तुल्येन च तैलेन भृङ्गराजरसेन च ॥ ३८ ॥
पचेत्तैलावशेषं तत्स्निग्धभाण्डे निरोधयेत् ।
मासैकं भूगतं कुर्यात्तेन शीर्षं प्रलेपयेत् ॥ ३९ ॥



कारवल्ल्या दलैर्वेष्ट्य ततो वस्त्रेण बन्धयेत् ।
निर्वाते क्षीरभोजी स्यात्क्षालयेत्रिफलाजलैः ॥ ४० ॥
नित्यमेवं प्रकर्तव्यं लेपनं दिनसप्तकम् ।
कपालरञ्जनं ख्यातं यावज्जीवं न संशयः ॥ ४१ ॥

केशरञ्जनार्थं काकतुण्ड्यादियोगः ।

बीजानि काकतुण्ड्याश्च सिर्यालीबीजै[1]संयुतम् ।
तच्चूर्णं दिनचत्वारि भाव्यं निर्गुण्डिजैर्द्रवैः ॥ ४२ ॥
जपापुष्पद्रवैस्तावत्ततः पातालयन्त्रके ।
तैलं ग्राह्यं तु तल्लेपात्केशानां रञ्जनं भवेत् ॥ ४३ ॥
वेष्ट्यमेरण्डपत्रैश्च निर्वाते क्षीरभोजनम् ।
कुर्यात्स्नानं काञ्जिकैश्च नित्यं सप्तदिने कृते ॥ ४४ ॥
यावज्जीवं न सन्देहः केशाः स्युर्भ्रमरोमाः ।

केशरञ्जनार्थं भृङ्गराजादियोगः ।

भृङ्गराजं काचमाचीं समांशं जल[2]मण्डवीम् ॥ ४५ ॥
सम्पि[3]ष्ट्व्यापूपिकां कृत्वा तैलमध्ये विपाचयेत् ।
पक्वां तां पेषयेत्तैलैर्लेपः स्यात्केशरञ्जनम् ॥ ४६ ॥
पूर्ववत्क्रमयोगेन सप्ताहात्तत्फलं भवेत् ।

केशरञ्जनार्थं त्रिफलादियोगः ।

अयस्कान्तमये पात्रे रात्रौ लेप्यं फलत्रयम् ॥ ४७ ॥
भृङ्गराजद्रवैः सार्धं प्रातः केशान् प्रलेपयेत् ।
एवं कुर्यात्त्रिसप्ताहं जायते पूर्ववत्फलम् ॥ ४८ ॥

केशरञ्जनार्थं कृष्णजीरकयोगः ।

प्रक्षिपेन्माहिषे शृङ्गे कृष्णजीरं तदन्धयेत् ।
गृहाग्रे कर्दमे क्षिप्त्वा षण्मासात्तत्समुद्धरेत् ॥ ४९ ॥
तद्द्रुतं जायते कृष्णं कर्षैकं शिरसि क्षिपेत् ।
वेष्टयेत्पूर्वयोगेन कपालरञ्जनं भवेत् ॥ ५० ॥
भ्रमराञ्जनसङ्काशं यावज्जीवं न संशयः ।

---

१ 'बीजकं समम्' ख, । २ 'जलमण्डया' ख. । ३ 'सर्पाक्ष्याऽपूपिकां' ख

केशरञ्जनार्थं नील्यादियोगः ।

नीलीपत्रं भृङ्गराजं त्रिफला कृष्णमायसम् ॥ ५१ ॥
मदनस्य च बीजानि पुष्पं कोरण्टकस्य च ।
अर्जुनस्य त्वचं चूर्णं नलिनीमूलकर्दमम् ॥ ५२ ॥
सर्वं तुल्यं क्षिपेद्भाण्डे लोहजे तन्निरोधयेत् ।
पक्षमेकं क्षिपेद्भूमौ भाण्डात्कल्कं समुद्धरेत् ॥ ५३ ॥
कल्काच्चतुर्गुणं तैलं तैलाच्चतुर्गुणं द्रवम् ।
भृङ्गत्रिफलजं योज्यं पचेत्तैलावशेषकम् ॥ ५४ ॥
परीक्षार्थं क्षिपेत्पक्षं बलाकाया यदा भवेत् ।
कृष्णवर्णं तदा सिद्धं पात्रे कृष्णायसे क्षिपेत् ॥ ५५ ॥
मासैकं धारयेत्तस्मिंस्ततः केशान् विलेपयेत् ।
तिष्ठन्ति मासषट्कं तु भ्रमरस्तोमसन्निभाः ॥ ५६ ॥

केशरञ्जनार्थं सीसकादियोगः ।

वासापलाशचिञ्चोत्थैर्दण्डैर्वाऽश्वत्थजैर्दृढम् ।
नागं पात्रगतं चाल्यं यावद्भवति मूर्च्छितम् ॥ ५७ ॥
पलैकं तत्समादाय लोहचूर्णं पलद्वयम् ।
त्रिपलं त्रिफलाचूर्णं दाडिमस्य फलत्वचः ॥ ५८ ॥
शुष्कं चूर्णं पलैकं तत्सर्वेषां काञ्जिकं समम् ।
भाण्डे सर्वं पचेत्किञ्चित्तं क्षिपेल्लोहभाजने ॥ ५९ ॥
भृङ्गराजकुरण्टोत्थद्रवं दत्वाऽऽतपे क्षिपेत् ।
त्रिसप्ताहं प्रयत्नेन द्रवो देयः पुनः पुनः ॥ ६० ॥
ततस्तं रक्षयेत्तेन लेपात्स्यात्केशरञ्जनम् ।
उक्तानुक्तेषु लेपेषु वेष्ट्यमेरण्डपत्रकैः ॥ ६१ ॥
शिरो रात्रौ दिवा स्नानं युक्तिरेषा प्रशस्यते ।

केशशुक्लीकरणयोगाः ।

वज्रीक्षीरेण सप्ताहं भावयेदभयाफलम् ।
तच्चूर्णयुक्ततैलस्य लेपाच्छुक्ला भवन्ति हि ॥ ६२ ॥
केशाश्च सर्वरोमाणि शङ्खवर्णा भवन्ति वै ।
सप्ताहं वज्रदुग्धेन सुश्वेतान् भावयेत्तिलान् ॥ ६३ ॥



तेभ्यस्तैलं गृहीत्वा तल्लेपाच्छुक्ला भवन्ति वै ।
गौर्यामलकचूर्णं तु वज्रीक्षीरेण सप्तधा ॥ ६४ ॥
भावयेत्तेन लेपेन शुक्लतां यान्ति मूर्धजाः ।
सिन्दूरं स्फटिकां श्वेतां जलेन सह लेपयेत् ॥ ६५ ॥
तल्लेपेन तु रोमाणि सुशुक्लानि भवन्ति हि ।
मासैकं मागधीचूर्णं वज्रीक्षीरेण भावयेत् ॥ ६६ ॥
नराश्वगजवाजीनां शुक्लीकरणमुत्तमम् ।
इन्द्रगोपं तैलिनी च तालकं रजनीद्वयम् ॥ ६७ ॥
मनःशिला च तुल्यांशं चूर्णं स्नुक्पयसा त्र्यहम् ।
भावयेदर्कजैः क्षीरैस्त्रिदिनं चातपे खरे ॥ ६८ ॥
ततः कूष्माण्डजैर्द्रावैर्भावयेद्दिनसप्तकम् ।
कूष्माण्डस्य ततो गर्भे क्षिप्त्वा मासात्समुद्धरेत् । ६९ ॥
तैलेन सर्वरोमाणि केशान् संलेपयेत्त्र्यहम् ।
वेष्टयेदर्कजैः पत्रैः शुक्लवर्णा भवन्ति च ॥ ७० ॥
स्नाने कृते शुष्ककचेषु रात्रौ लेपे कृते पूर्वदलैस्तु वेष्टयम् ।
दध्ना तिलै[1]: स्नानमतः प्रभाते कुर्यात्त्र्यहं लेपनमित्थमेव ॥ ७१ ॥

इति पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरे रसायनखण्डे
उद्वर्तनकेशरञ्जनाधिकारो नाम पञ्चमोपदेशः ।

---

## अथ षष्ठोपदेशः ।

येषां रामा रमणकुशला रागसक्ताः प्रगल्भाः
कामासक्ता हरिणनयनाश्चन्द्रबिम्बाननाश्च ।
तेषां वक्ष्ये मदनसुखदां वीर्यवृद्धिं प्रभूतां
[2]मत्ताः सिद्धाः शतमपि दृढास्तादृशास्तोषयन्ति ॥ १ ॥

वाजीकरो मकरध्वजरसः ।

वज्रहेमार्कसूताभ्रलोहभस्म क्रमोत्तरम् ।

---

१ 'जलैः' ख. ।
२ 'यस्यां सिद्धौ शतमपि वनितास्तादृशास्तोषयन्ति' ख. ।

सर्वं कन्याद्रवैर्मर्द्यं शाल्मल्याश्च द्रवैस्त्र्यहम् ॥ २ ॥
तद्गुष्ट्वा काचकुप्यन्तर्वालुकायां त्र्यहं पचेत् ।
तत्कल्कं मुशलीक्वाथैर्वज्राङ्कक्षीरसंयुतैः ॥ ३ ॥
दिनैकं मर्दयेत्खल्वे रुद्ध्वाऽन्तर्भूधरे पुटेत् ।
यामादुद्धृत्य सञ्चूर्ण्य सिताकृष्णात्रिजातकैः ॥ ४ ॥
समैः समं विमिश्र्याथ माषैकं भक्षयेत्सदा ।
मागधी मुशली यष्टी वानरीबीजकं समम् ॥ ५ ॥
चूर्णं सिताज्यगोक्षीरैः पलार्धं पाययेदनु ।
कामिनीनां सहस्रैकं रममाणो न मुह्यति ।
सेवनाद्दृढकायः स्याद्रसोऽयं मकरध्वजः ॥ ६ ॥

वाजीकरो मनोदयरसः ।

शुद्धसूतं समं गन्धं रक्तोत्पलदलद्रवैः ।
यामं मर्द्यं पुनर्गन्धं सार्धं तत्र विनिक्षिपेत् ॥ ७ ॥
पूर्वद्रावैर्दिनं मर्द्यं रसार्धं गन्धकं पुनः ।
दत्त्वा तद्वद्दिनं मर्द्यं काचकूप्यां निरोधयेत् ॥ ८ ॥
दिनैकं[1] वालुकायन्त्रे पक्वमुद्धृत्य चूर्णयेत् ।
भूकूष्माण्डीकषायेण भावयेद्दिनसप्तकम् ॥ ९ ॥
छायायां तत्सितातुल्यं निष्कैकं भक्षयेत्सदा ।
शणमूलं सबीजं च मुशली शर्करा समम् ॥ १० ॥
गवां क्षीरैः पलार्धं तु अनु रात्रौ सदा पिबेत् ।
अनन्तं वर्धते वीर्यं रसोऽयं मदनोदयः ॥ ११ ॥

वाजीकरो मदनेश्वररसः ।

शुद्धसूतसमं गन्धं बदरीचित्रकद्रवैः ।
मर्द्यं चाङ्कोल्लजैर्द्रावैस्तप्तखल्वे दिनत्रयम् ॥ १२ ॥
सद्यो हताजमांसस्य पिण्डे न्यस्तं च सीवयेत् ।
तत्पिण्डं तिलतैलेन लोहपात्रे शनैः पचेत् ॥ १३ ॥
यावन्मांसं रक्तवर्णं ततः सूतं समुद्धरेत् ।
त्रिदिनं मुशलीक्वाथैर्भावितं सितया युतम् ॥ १४ ॥

[1] 'द्विदिनं' ख. ।



निष्कैकं भक्षयेन्नित्यं रसोऽयं मदनेश्वरः ।
विदारीकन्दचूर्णं तु क्षीराज्येन पलं पिबेत् ॥ १५ ॥
रमयेत्स्त्रीशतं नित्यं तत्त्यागादन्धतां व्रजेत् ।

वाजीकरः कामकलाख्यरसः ।

मृताभ्रं पारदं स्वर्णं तुल्यं मर्द्यं दिनत्रयम् ॥ १६ ॥
मुशलीत्रिफलाक्वाथैर्वाजिगन्धाकषायकैः ।
कदलीकन्दजैर्द्रावैस्तद्गोलं चान्धितं पुटेत् ॥ १७ ॥
भूधरे दिनमात्रं तु समुद्धृत्याथ मर्दयेत् ।
दिनैकं पूर्वजैर्द्रावैस्तद्वद्रुद्ध्वा पुटे पचेत् ॥ १८ ॥
पुनर्मर्द्यं पुनः पाच्यमेवमष्टपुटैः पचेत् ।
शाल्मलीजातनिर्यासैस्तुल्यं शर्करया सह ॥ १९ ॥
खादेन्निष्कद्वयं नित्यं द्रावयेद्वनिताशतम् ।
गोक्षीरैर्मर्कटीबीजं पलार्धं पाययेदनु ॥ २० ॥
सर्वाङ्गोद्वर्तनं कुर्यात्त्सयवैः शाल्मलीद्रवैः ।
रसः कामकलाख्योऽयं महावीर्यकरो नृणाम् ॥ २१ ॥

वाजीकरः कामदेवरसः ।

मृतसूतं त्रयो भागा भागैकं हाटकं मृतम् ।
कदलीकन्दजैर्द्रावैः शाल्मलीजद्रवैर्दिनम् ॥ २२ ॥
गोक्षीरैश्च दिनं मर्द्यं क्षणैकं पाचयेद्घृतैः ।
तन्मध्ये शर्करां द्राक्षां धात्रीं रम्भाफलं मधु ॥ २३ ॥
गोक्षीरं मुशलीं माषान् कोकिलाक्षस्य बीजकम् ।
सूताच्चतुर्गुणं क्षिप्त्वा मर्द्यं शाल्मलिजैर्द्रवैः ॥ २४ ॥
तत्सर्वं दिनमेकं तु कामदेवो रसो भवेत् ।
निष्कमात्रं सदा भक्ष्यं गवां क्षीरं पिबेदनु ॥ २५ ॥
मैथुने दृढलिङ्गः स्याद्द्रावयेद्वनिताकुलम् ।

वाजीकरो रतिकामरसः ।

प्रारम्भरजसा स्त्रीणां मर्दयेद्भस्मसूतकम् ॥ २६ ॥
मृतं ताम्रं च तारं च गन्धकं च समं दिनम् ।
सितामध्वाज्यसंयुक्तं निष्कं भुक्त्वा पिबेत्पयः ॥ २७ ॥

रतिकामरसो नाम कामिनीरमणे हितः ।
वानरीमूलगोधूमं कोकिलाक्षस्य बीजकम् ॥ २८ ॥
माषाश्चेक्षुरसैः सर्वं लोडितं पाचयेद्घृतैः ।
तेनैव वटकाः कार्या नित्यं खादेद्द्वयं द्वयम् ॥ २९ ॥
अनुपानमिदं सिद्धं सेवनाद्रमयेच्छतम् ।

वाजीकरो मदवर्धनरसः ।

शुद्धसूतसमं गन्धं त्र्यहं कह्लारजैर्द्रवैः ॥ ३० ॥
मर्दितं चान्धितं पच्याद्यामं वालुकयन्त्रके ।
रक्तागस्त्यद्रवैर्भाव्यं दिनैकं तु सितायुतम् ॥ ३१ ॥
निष्कमात्रं सदा खादेद्रसोऽयं मदवर्धनः ।
अजस्य वृषणं क्षीरे पक्वं तिलसितायुतम् ॥ ३२ ॥
यथेष्टं भक्षयेच्चानु रमयेत्कामिनीशतम् ।

वाजीकरी अनङ्गसुन्दरीवटिका ।

पलद्वयं द्वयं शुद्धं पारदं गन्धकं शुभम् ॥ ३३ ॥
कर्षैकं मारितं स्वर्णं पलैकं मृतताम्रकम् ।
रौप्यभस्म चतुर्निष्कं सर्वं पञ्चामृतैर्दिनम् ॥ ३४ ॥
मर्द्यं रुद्ध्वा दिनं पच्यान्मूधरे तं समुद्धरेत् ।
पिष्ट्वा पञ्चामृतैः खादेद्वटिकां बदराकृतिम् ॥ ३५ ॥
अनङ्गसुन्दरी ख्याता रामाणां रमते शतम् ।
शाल्मलीमूलचूर्णं तु मधुशर्करयाऽन्वितम् ॥ ३६ ॥
पलैकं भक्षयेच्चानु सिताक्षीरं तु पाययेत् ।

वाजीकरः कामनायकरसः ।

शाल्मल्युत्थैर्द्रवैर्मर्द्यः पक्षैकं शुद्धपारदः ॥ ३७ ॥
शुद्धगन्धं त्रिसप्ताहं तद्द्रवैर्मर्दयेत्पृथक् ।
समावेतौ पुनर्मर्द्यौ घृतैर्यामचतुष्टयम् ॥ ३८ ॥
तद्गोलं बन्धयेद्वस्त्रे घृतैर्यामद्वयं पचेत् ।
ततस्तं शाल्मलीद्रावैर्मर्दयेद्दिवसत्रयम् ॥ ३९ ॥
निक्षिपेत्काचकुप्यन्तर्वालुकायन्त्रगं पचेत् ।
क्षिपेच्छाल्मलिजं द्रावं कुप्या गर्भे दिनावधि ॥ ४० ॥



सार्द्रमेव समुद्धृत्य मिश्र्यं तत्सितया समम् ।
निष्कमात्रं सदा खादेद्रसोऽयं कामनायकः ॥ ४१ ॥
मुशलीं ससितां क्षीरैः पलैकां पाययेदनु ।
कामिनीनां सहस्रं तु क्षोभयेन्निमिषान्तरे ॥ ४२ ॥

वाजीकरः पूर्णेन्दुरसः ।

शुद्धसूतत्रयो भागा भागैकं ताम्रचूर्णकम् ।
कृत्वा पिष्टीं निरुध्याथ रम्भाकन्दोदरे पुनः ॥ ४३ ॥
मृल्लिप्तं शोषितं पच्याद्दिनैकं करिषाग्निना ।
एवं सप्तदिनं पच्यात्कन्दे कन्दे दिनं दिनम् ॥ ४४ ॥
उद्धृत्य बन्धयेद्वस्त्रे दृढे चैव चतुर्गुणे ।
क्षुद्रशम्बूकमांसाक्तच्छागीरक्तगतं पचेत् ॥ ४५ ॥
दोलायन्त्रे त्र्यहं यावद्देयं रक्तं पुनः पुनः ।
गुडूच्या गजपिप्पल्या कदल्या कोकिलाक्षकैः ॥ ४६ ॥
गोक्षुरीवानरीमूलजातीमूलस्य च द्रवैः ।
पाचयेत्तत्कषायैर्वा दोलायन्त्रे दिनत्रयम् ॥ ४७ ॥
ततः क्षीरे सितायुक्ते तद्वत्पच्याद्दिनावधि ।
उद्धृत्य मुशलीक्वाथैर्मर्द्यं यामचतुष्टयम् ॥ ४८ ॥
रसः पूर्णेन्दुनामाऽयं खादेन्मांसं सितायुतम् ।
गोक्षुरो वानरीबीजं गुडूची गजपिप्पली ॥ ४९ ॥
कोकिलाक्षस्य बीजानि मज्जा कार्पासबीजजा ।
शतावरी च रम्भायाः फलं सर्वं समं भवेत् ॥ ५० ॥
सर्वतुल्या सिता योज्या मधुना लोडितं लिहेत् ।
पलार्धमनुपानं स्यात्ततः पेयं गवां पयः ॥ ५१ ॥
कामिनीनां सहस्रैकं रमते कामदेववत् ।

वाजीकरो मदनकामो रसः ।

पद्मबीजं कसेरुं च कन्दं नालं च कर्णिकाम् ॥ ५२ ॥
मुशली भृङ्गराट् द्राक्षा पक्वं श्लेष्मातकं फलम् ।
विजया मर्कटी माषाः शणबीजानि वै तिलाः ॥ ५३ ॥

---

१ 'सुशीतलां' ख. ।

कोकिलाक्षस्य बीजानि भूकूष्माण्डी शतावरी ।
शृङ्गाटं चिर्भिटं फञ्जीबीजानि चाश्वगन्धिका ॥ ५४ ॥
एतत्सर्वं समं चूर्ण्य पादांशं चाहरेत्पृथक् ।
पादांशस्याष्टमांशेन शुद्धं सूतं विमिश्रयेत् ॥ ५५ ॥
पारदादष्टमांशं च कर्पूरं तत्र निक्षिपेत् ।
चातुर्जातकमेकैकं कर्पूराद्द्विगुणं भवेत् ॥ ५६ ॥
सूततुल्या सिता योज्या मर्द्यं रम्भाद्रवैर्दिनम् ।
तद्गोलं डामरे यन्त्रे क्रमवृद्धाग्निना पचेत् ॥ ५७ ॥
दिनान्ते चोर्ध्वलग्नं तद्ग्राह्यं रम्भाद्रवैर्दृढम् ।
मर्दितं सितया तुल्यं माषैकं भक्षयेत्सदा ॥ ५८ ॥
रसो मदनकामोऽयं बलवीर्यविवर्धनः ।
दिव्यरूपा भजेद्रामाः कामाकुलकलान्विताः ॥ ५९ ॥
भागत्रयं तु यत्पूर्वं पृथक्चूर्णं सुरक्षितम् ।
कुलीरमांसच्छागाण्डचटकाण्डानि वै पृथक् ॥ ६० ॥
प्रत्येकं चूर्णयेत्तुल्यं सर्वतुल्यं गवां पयः ।
तत्सर्वं चालयन् पच्याद्यावत्पिण्डत्वमागतम् ॥ ६१ ॥
प्रसार्य काष्ठपात्रान्तश्छायाशुष्कं विचूर्णयेत् ।
अस्य चूर्णस्य कर्पूरं चतुःषष्ट्यंशकं क्षिपेत् ॥ ६२ ॥
चातुर्जातकचूर्णं तु क्षिपेद्द्वात्रिंशदंशतः ।
सर्वतुल्या सिता योज्या रक्षयेन्नूतने घटे ॥ ६३ ॥
कर्षद्वयं गवां क्षीरैरनुपानैः सदा पिबेत् ।

वाजीकरा अभ्रकयोगाः ।

निष्कैकं मारितं चाभ्रं खादेच्छर्करया समम् ॥ ६४ ॥
शाल्मलीमूलचूर्णं तु भृङ्गराजस्य मूलकम् ।
पलैकं सितया चानु सेवेत कामिनीशतम् ॥ ६५ ॥
वानरीकोकिलाक्षस्य बीजानि तिलमाषकाः ।
वासागोक्षुरयोर्मूलं सर्वं चूर्णं समं भवेत् ॥ ६६ ॥
चूर्णतुल्यं मृतं चाभ्रं सर्वतुल्या तु शर्करा ।
एतत्कर्षं गवां क्षीरैः पिबेत् कामाङ्गनायकः ॥ ६७ ॥



तैलेन पक्वं चटकं खादेत्पूर्वं तु भोजनात् ।
भोजनान्ते पिबेत्क्षीरं रामाणां रमयेच्छतम् ॥ ६८ ॥
अश्वगन्धाशतावर्योः शाल्मल्याश्चित्रकस्य च ।
मूलं मुशलिजं कन्दं कोकिलाक्षस्य बीजकम् ॥ ६९ ॥
विदारीपद्मिनीकन्दं वानरीबीजकं समम् ।
एतच्चूर्णं मृताभ्रं तु तुल्यं शर्करया समम् ॥ ७० ॥
पलार्धं पाययेत्क्षीरैः खादेत्कुक्कुटमांसकम् ।
क्षीरपानं ततः कृत्वा रमयेत्कामिनीशतम् ॥ ७१ ॥

वाजीकरो धात्रीलोहः ।

धात्रीफलस्य चूर्णं तु भावयेत्तत्फलद्रवैः ।
एकविंशतिवारान् वै शोष्यं पेष्यं पुनः पुनः ॥ ७२ ॥
तत्पादांशं मृतं लोहं मध्वाज्यशर्करान्वितम् ।
पलैकं भक्षयेन्नित्यं सिताक्षीरं पिबेदनु ॥ ७३ ॥
धात्रीलोहप्रभावेन रमयेत् कामिनीशतम् ।

वाजीकरः पुनर्नवादियोगः ।

पुनर्नवा नागबला वाजिगन्धा शतावरी ॥ ७४ ॥
गोक्षुरं मुशलीकन्दं मृतं सूतं समं समम् ।
चूर्णं मध्वाज्यसंयुक्तं निष्कं भुक्त्वा पिबेत्पयः ॥ ७५ ॥
तण्डुलं वानरीबीजं चूर्णयेत्सितया समम् ।
आलोडयेद्द्रवां क्षीरैस्तेन पच्यादपूपिकाम् ॥ ७६ ॥
तां घृतैर्भक्षयेच्चानु रमयेत्कामिनीकुलम् ।

वाजीकरो वटकः ।

वानरीबीजचूर्णं तु त्वग्वर्ज्यं माषचूर्णकम् ॥ ७७ ॥
नालिकेरोदकैर्भाव्यं यामान्ते पेषयेत्ततः ।
विंशत्यंशेन पिष्टस्य मृतमभ्रं विमिश्रयेत् ॥ ७८ ॥
घृतैस्तद्वटकं पक्त्वा मध्वाज्याभ्यां तु भक्षयेत् ।
क्षीरं सितां चानुपिबेद्रामाणां रमते शतम् ॥ ७९ ॥

---

१ 'धात्रीफलं' ख. ।

वाजीकरो वालुकामत्स्ययोगः ।

वालुकासम्भवं मत्स्यं सुपक्कं भक्षयेद् घृतैः ।
षण्ढोऽपि जायते कामी वीर्यस्तम्भः प्रजायते ॥ ८० ॥

वाजीकरो नाभिलेपः ।

ऊर्णनाभिं समं क्षौद्रैः पिष्ट्वा नाभिं प्रलेपयेत् ।
मुच्यते बद्धषण्ढोऽपि क्षीरैर्वह्निं पिबेदनु ॥ ८१ ॥
स्वयमग्निरसं चात्र त्रिनिष्कं भक्षयेत्सदा ।

वाजीकरो माषयोगः ।

घृताक्ता दलिता माषा क्षीरेण सह पाचिताः ॥ ८२ ॥
सिताज्यसंयुता भक्ष्या वीर्यवृद्धिकरा ह्यलम् ।
क्षणे क्षणे भजेद्रामां यथा पारावतो ध्रुवम् ॥ ८३ ॥

कामेश्वर मोदकः ।

सम्यग्जारितमभ्रकं कटुफलं कुष्ठाश्वगन्धामृता
मेथी मोचरसो विदारिमुशलीगोकण्टकेक्षूरकां ।
रम्भाकन्दशतावरी ह्यजमुदा माषास्तिला धान्यकं
यष्टी नागबला [1]कंचोरमदनं जातीफलं सैन्धवम् ॥ ८४ ॥
भार्गीकर्कटशृङ्गिभृङ्गत्रिकटु द्वौ जीरकौ चित्रकं
चातुर्जातपुनर्नवागजकणाद्राक्षाशणं वासकः ।
शाल्मल्यङ्घ्रि फलत्रिकं कपिभवं बीजं समं चूर्णये-
च्चूर्णांशा विजया सिता द्विगुणिता मध्वाज्यमिश्रं तु तत् ॥८५॥
कर्षार्धां गुलिकां विलेह्यमथवा कृत्वा सदा सेवये-
त्पेया क्षीरसिताऽनु वीर्यकरणे स्तम्भेऽप्यलं कामिनाम् ।
श्यामावश्यकरः समाधिसुखदः सङ्गेऽङ्गनाद्रावकः
क्षीणे पुष्टिकरः क्षयक्षयकरो नानामयध्वंसकः ॥ ८६ ॥
कासश्वासमहातिसारशमनो मन्दाग्निसन्दीपनो
ह्यर्शांसि ग्रहणीप्रमेहनिचयश्लेष्मातिसारप्रणुत् ।
नित्यानन्दकथैर्विशेषकवितावाचाविलासोद्भवं
दत्ते सर्वगुणं महास्थिरदशां ध्यानावसाने भृशम् ॥ ८७ ॥

१ 'कसेरुदमनं' ख. ।



अभ्यासेन निहन्ति मृत्युपलितं कामेश्वरो वत्सरा-
त्सर्वेषां हितकारको निगदितः श्रीनित्यनाथेन वै
वृद्धानामपि कामवर्धनकरः प्रौढाङ्गनासङ्गमे
सिद्धोऽयं धनवस्त्वमोघसुखदो भूपैः सदा सेव्यताम् ॥८८॥
इत्येतदुक्तं बहुवीर्यवर्धनं रात्रौ सदा क्षीरसितासमन्वितम् ।
भुक्तोत्तरं सेवितमाशु कामिनां विदग्धरामाकुलवश्यकारकम् ॥

इति पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते श्रीरसरत्नाकरे रसायनखण्डे वीर्यवर्धनं नाम षष्ठ उपदेशः ॥

---

## अथ सप्तमोपदेशः ।

वीर्यं स्थिरं योनिमुखेषु येषां स्थूलं दृढं दीर्घतमं च लिङ्गम् ।
तेषां प्रगल्भाः प्रमदाश्च सर्वा भवन्ति तृप्ताः सुरतप्रसङ्गे ॥ १ ॥

वीर्यस्तम्भकरी ब्रह्माण्डगुटिका ।

नागवल्लीदलद्रावैः सप्ताहं शुद्धपारदम् ।
मर्दयेत्तप्तखल्वे तु क्षालयेत्काञ्जिकैस्ततः ॥ २ ॥
तत्क्षिपेद्विषकन्दस्य गर्भे निष्कचतुष्टयम् ।
विषेण तन्मुखं रुद्ध्वा स्थूलवाराहमांसके ॥ ३ ॥
पिण्डं गर्भे निरुन्ध्याथ मुखं सूत्रेण सीवयेत् ।
सन्ध्याकाले बलिं दत्त्वा कुक्कुटं मदिरायुतम् ॥ ४ ॥
ततश्चूल्ल्यां लोहपात्रे तैले धत्तूरसम्भवे ।
तं विंशतिपले पच्यात्तत्पिण्डं मन्दवह्निना ॥ ५ ॥
सन्ध्यामारभ्य यत्नेन यावत्सूर्योदयं तथा ।
हठाज्जागरणं कुर्यादन्यथा तन्न सिध्यति ॥ ६ ॥
प्रातरुद्धृत्य गुटिकां क्षीरभाण्डे विनिक्षिपेत् ।
तत्क्षीरं शुष्यति क्षिप्रमेतत्प्रत्ययमद्भुतम् ॥ ७ ॥
दृष्ट्वा तां धारयेद्वक्त्रे वीर्यस्तम्भकरीं रतौ ।

१ 'मम दृष्टप्रत्ययकरो' ख. ।

क्षीरं पीत्वा रमेद्रामाः कामाकुलकलान्विताः ॥ ८ ॥
मुखाद्धस्तं यदा प्राप्ता तदा वीर्यं पतत्यलम् ।
ब्रह्माण्डगुटिका नाम शोषयन्ती महोदधिम् ॥ ९ ॥

वीर्यस्तम्भकरो लिङ्गलेपः ।

दग्धमङ्कोल्लमूलं तु कर्पूरं कुङ्कुमं तथा ।
रोचना सहदेवी च समं सर्वं प्रपेषयेत् ॥ १० ॥
विषमुष्टिकतैलेन लिप्तलिङ्गो ह्यनेन वै ।
नरो नारीसहस्रैकं गच्छन् वीर्यं न मुञ्चति ॥ ११ ॥

वीर्यस्तम्भकरो दीपः ।

श्वेतार्कतूलजां वर्त्तिं कृत्वा सूकरमेदसा ।
यावज्ज्वलति दीपोऽयं तावद्वीर्यं स्थिरं नृणाम् ॥ १२ ॥

वीर्यस्तम्भकरी इन्द्रवारुणिकामूलाद्या वटीः ।

इन्द्रवारुणिकामूलं पुष्ये नग्नः समुद्धरेत् ।
त्र्यूषणैश्च गवां क्षीरैः पिष्ट्वा कुर्याद्वटीं दृढाम् ॥ १३ ॥
छायाशुष्का स्थिता वक्त्रे वीर्यस्तम्भकरी नृणाम् ।
वरमङ्कोलतैलेन नाभिलेपोऽपि वीर्यधृक् ॥ १४ ॥

वीर्यस्तम्भार्थं रक्तापामार्गमूलयोगः ।

रक्तापामार्गमूलं तु सोमवारेऽभिमन्त्रयेत् ।
भौमे प्रातः समुद्धृत्य बन्धेत्कट्यां च वीर्यधृक् ॥ १५ ॥

वीर्यस्तम्भकरः पादलेपः ।

चटकानङ्कुलीतैलैः पादाधः सम्प्रलेपयेत् ।
न मुञ्चति नरो वीर्यं शय्यां पादेन न स्पृशेत् ॥ १६ ॥

वीर्यस्तम्भार्थं कट्यां सर्पास्थिधारणयोगः ।

डुण्डुभो नाम यः सर्पः कृष्णवर्णस्तमाहरेत् ।
तस्यास्थि धारयेत्कट्यां नरो वीर्यं न मुञ्चति ॥ १७ ॥
तन्मुक्ते मुञ्चते वीर्यं सिद्धयोग उदाहृतः ।

वीर्यस्तम्भकरो नाभिलेपः ।

सहदेवीयमूलं तु तत्समं पद्मकेशरम् ॥ १८ ॥
पिष्ट्वा मध्वाज्यसंयुक्तो लेपो नाभौ तु वीर्यधृक् ।



वीर्यस्तम्भकरी कोकिलाक्षादिवटी ।

श्वेतस्य कोकिलाक्षस्य बीजं मूलं समाहरेत् ॥ १९ ॥
पिष्टं तण्डुलसम्भूतं बदरीणां फलं समम् ।
जलैः पिष्ट्वा वटी धार्या वीर्यस्तम्भकरी मुखे ॥ २० ॥

वीर्यस्तम्भकरो नाभिलेपः ।

नागवल्लीपयःपिष्टं लज्जामूलं प्रलेपयेत् ।
तन्नाभौ वीर्यधृक् पुंसां मूलं वा तुलसीभवम् ॥ २१ ॥

वीर्यस्तभकरो दीपः ।

मूलेन श्वेतगुञ्जाया वर्तिं कृत्वा प्रदीपयेत् ।
दीपं सूकरतैलेन[1] वीर्यस्तम्भकरं नृणाम् ॥ २२ ॥

वीर्यस्तम्भकरी वटिका ।

बीजमीश्वरालिङ्ग्यास्तु सूतं वृश्चिककण्टकम् ।
सर्वं पूगफलस्यान्तः क्षिप्त्वा वेष्टयं त्रिलोहकैः ॥ २३ ॥
जिह्वोपरि स्थिते तस्मिन्नरो वीर्यं न मुञ्चति ।

वीर्यस्तम्भार्थं श्लेष्मातकादियोगः ।

श्लेष्मातस्य कुरण्टस्य बीजं फञ्ज्याः समाहरेत् ॥ २४ ॥
अजाक्षीरेण तं पिष्ट्वा कर्षं भुक्त्वा तु वीर्यधृक् ।

वीर्यस्तम्भार्थं सूरणादियोगः ।

सूरणं तुलसीमूलं[2] ताम्बूलैः सह भक्षयेत् ॥ २५ ॥
न मुञ्चति नरो वीर्यं कर्षैकेन पृथक्पृथक् ।

वीर्यस्तम्भार्थं मार्जारनखादिबन्धनम् ।

नखास्थीनि समादाय मार्जारस्य सितस्य वै ॥ २६ ॥
श्वेतापराजितामूलं नीलीमूलं श्मशानजम् ।
सर्वं बद्ध्वा कटौ वीर्यं चिरकालं न मुञ्चति ॥ २७ ॥

वीर्यस्तम्भकरः पादलेपः ।

भूलता सिक्थकं तुल्यं लिम्पेत्तैलैः कुसुम्भजैः ।
पादौ वीर्यधरो भूयात्पद्भ्यां शय्यां न संस्पृशेत् ॥ २८ ॥
नवनीतेन वा लेप्यं चटकाण्डं च पूर्ववत् ।

---

१ 'तुम्बरुतैलेन' ख. । २ 'तुलसीं फञ्जीं' ख. ।

इन्द्रवारुणिकामूलं उन्मत्ताजस्य मूत्रतः ॥ २९ ॥
भावयेत्तेन लेपेन नरो वीर्यं न मुञ्चति ।

वीर्यस्तम्भकरो लिङ्गलेपः ।

दाडिमस्य त्वचश्चूर्णं फलं भल्लातकाक्षयोः ॥ ३० ॥
पिष्ट्वा तत्कटुतैलेन लेपः स्यात्पूर्ववत्फलम् ।
कर्पूरं टङ्कणं सूतं मुनिपुष्परसं मधु ॥ ३१ ॥
मर्दयित्वा लिपेत्तेन लिङ्गं यावत्समन्ततः ।
जलैः प्रक्षालयेल्लिङ्गं भजेद्रामां यथोचिताम् ॥ ३२ ॥
वीर्यं स्तम्भयते पुंसां याममात्रं न संशयः ।

वीर्यस्तम्भार्थं कट्यां पारदगुटिकाधारणम् ।

कृष्णधत्तूरतैलेन पारदं घर्षयेद्दिनम् ॥ ३३ ॥
त्रिलोहैर्वेष्टितं बद्धं तत्कट्यां वीर्यधारकम् ।

वीर्यस्तम्भार्थं पारदादियोगः ।

सूतं स्वर्णं व्योमसत्त्वं तारं ताम्रं च रोचनम् ॥ ३४ ॥
बीजं वै शरपुङ्खायाः कृष्णधत्तूरबीजकम् ।
सर्वं मर्द्यं वटक्षीरैः कुबेराक्षस्य बीजके ॥ ३५ ॥
तत्क्षिप्त्वा धारयेद्वक्त्रे वीर्यस्तम्भकरं चिरम् ।

वीर्यस्तम्भार्थं हस्ते मुद्रिकाधारणम् ।

कृकलासस्य पुच्छाग्रं मुद्रिकाकारतां कृतम् ॥ ३६ ॥
ऊर्णनाभस्य जालेन वेष्टयित्वाऽथ धारयेत् ।
वामहस्ते कनिष्ठायां नरो वीर्यं न मुञ्चति ॥ ३७ ॥

वीर्यस्तम्भार्थं स्थलमीनयोगः ।

स्थलमीनं समादाय शुष्कं चूर्णेन लेपयेत् ।
उच्छिष्टं रक्षयेत्किञ्चिद्वक्त्रे धार्यश्च वीर्यधृक् ॥ ३८ ॥

पश्चिमसमुद्रस्य तटे अमरचण्डेश्वरो नाम देवतायतनं, तस्याग्रे वालुकामध्ये स्थलमीनास्तिष्ठन्ति, ते च वालुकामीनाः कथ्यन्ते ॥

वनिताद्रावणार्थं जलौकायोगाः ।

शुद्धसूते विनिक्षिप्य स्वर्णं वा नागमेव वा ।
अष्टमांशेन तत्सर्वं मर्दयेत्तप्तखल्वके ॥ ३९ ॥



शाल्मल्याश्चैव पञ्चाङ्गरसं तत्र विनिक्षिपेत् ।
श्लेष्मान्तस्य फलं पक्वं कोकिलाक्षस्य बीजकम् ॥ ४० ॥
तिलपिण्याकचूर्णं तु दत्त्वा तावद्विमर्दयेत् ।
जलौका जायते यावत्ततः कर्पूरटङ्कणम् ॥ ४१ ॥
कपिकच्छुकरोमाणि बाकुचीतैलकं पटु ।
मागधीं च जलैः पिष्ट्वा तत्सर्वं तप्तखल्वके ॥ ४२ ॥
क्षिपेत्पूर्वजलौकां च त्रिसप्ताहं विमर्दयेत् ।
सा योज्या कामकाले तु नारीणां योनिगह्वरे ॥ ४३ ॥
मददर्पहरा तासां मदविह्वलकारका ।
बाल्ये षडङ्गुला योज्या यौवने सा नवाङ्गुला ॥ ४४ ॥
द्वादशाङ्गुलिका योज्या प्रगल्भानां जलौकिका ।
यो वा तां धारयेन्मूर्ध्नि वीर्यं तस्य स्थिरं भवेत् ॥ ४५ ॥
पारदादष्टमांशेन सुवर्णं नागमेव वा ।
योजयेत्तप्तखल्वे तु शाल्मलीत्वङ्गनिजद्रवैः ॥ ४६ ॥
मुनिपत्ररसैर्नीलीमूलद्रावैश्च मर्दयेत् ।
श्लेष्मातकफलं पक्वं कोकिलाक्षस्य बीजकम् ॥ ४७ ॥
मज्जा सुपक्वा बिल्वस्य क्षिपेत्तत्रैव मर्दयेत् ।
जलौका जायते यावत्ततस्तस्मात्समुद्धरेत् ॥ ४८ ॥
त्रिसप्ताहं तप्तखल्वे कर्पूराद्यैश्च पूर्ववत् ।
मर्दयेच्च फलं तद्वज्जायते नात्र संशयः ॥ ४९ ॥
रसादष्टमभागं तु सुवर्णं नागमेव वा ।
योज्यं च त्रिफला भृङ्गी शुण्ठी छागपयो घृतम् ॥ ५० ॥
क्षौद्रं गोमूत्रकं चैव सर्वं सप्तदिनावधि ।
मर्दयेत्तदवच्छिन्नं जलौका यावता भवेत् ॥ ५१ ॥
कर्पूराद्यैः पुनर्मर्द्यं तप्तखल्वे तु पूर्ववत् ।
पूर्ववज्जायते सिद्धिस्तद्वद्योगे न संशयः ॥ ५२ ॥
त्रिदिनं मर्दयेत्खल्वे सूतं निष्कचतुष्टयम् ।
त्रिफलायास्तु निर्यासं स्तोकं स्तोकं विनिक्षिपेत् ॥५३॥
पयश्चैव महाशृङ्ग्या दातव्यं मर्दनक्षमम् ।

जलौका मर्दनाख्येयं जायते सुखदा नृणाम् ॥ ५४ ॥
रामाणां मदमत्तानां द्राविकाऽग्नौ घृतं यथा ।
पूर्ववत्क्रमयोगेन वीर्यस्तम्भकरी भवेत् ॥ ५५ ॥

लिङ्गवर्धनाः कतिपययोगाः ।

पारदं मरिचं कुष्ठं तगरं कण्टकारिका ।
अश्वगन्धातिलक्षौद्रसैन्धवश्वेतसर्षपाः ॥ ५६ ॥
अपामार्गो यवा माषाः पिप्पली च समं जलैः ।
पिष्ट्वा विमर्दयेत्तेन लिङ्गं मासमहर्निशम् ॥ ५७ ॥
वर्धते हस्तमात्रं तत्स्थौल्येन मुशलोपमम् ।
वराहवसया क्षौद्रैर्लिङ्गं मासं विलेपयेत् ॥ ५८ ॥
अतिदीर्घं दृढं स्थूलं जायते नात्र संशयः ।
अश्वगन्धा वचा कुष्ठं बृहती च शतावरी ॥ ५९ ॥
पाचयेत्तिलतैलेन मर्दयेत्तेन पूर्ववत् ।
लिङ्गं स्थूलं दृढं दीर्घं मासमात्रात्प्रजायते ॥ ६० ॥
जम्बूसूकरजं तैलं महाराष्ट्री च टङ्कणम् ।
मधुना सह लेपोऽयं मासाल्लिङ्गस्य वृद्धिकृत् ॥ ६१ ॥
मिश्रितं मुशलीचूर्णं माहिषैर्नवनीतकैः ।
तद्भाण्डं धान्यराशौ च स्थितं सप्तदिनैर्हरेत् ॥ ६२ ॥
तेन प्रलेपयेल्लिङ्गं वर्धते मासमात्रतः ।
पिप्पली मरिचं क्षीरं सिता तुल्यं विमर्दयेत् ॥ ६३ ॥
मासैकं वृद्धिकृल्लिङ्गे नात्र कार्या विचारणा ।
माहिषं गोघृतं तुल्यं सैन्धवं च समं समम् ॥ ६४ ॥
अनेन लेपयेल्लिङ्गं स्थूलं स्यान्मासमात्रतः ।
अश्वगन्धापमार्गौ च सारिवाऽक्षफलं तिलाः ॥ ६५ ॥
सर्षपेन्द्रयवं तुल्यमजाक्षीरेण पेषयेत् ।
तेन लिङ्गं तु मासैकं मर्दनाद्वृद्धिमाप्नुयात् ॥ ६६ ॥
मांसीमक्षफलं कुष्ठमश्वगन्धां शतावरीम् ।
तैले पक्त्वा प्रलेपोऽयं मासाल्लिङ्गस्य वृद्धिकृत् ॥ ६७ ॥

१ 'शैवालं' क. ।



रोहीतमत्स्यजं पित्तं जलौका लाङ्गली समम् ।
अनेन लेपयेल्लिङ्गं स्यान्मासान्मुशलोपमम् ॥ ६८ ॥
निशा सिताऽश्वगन्धा च पारदं मर्दयेत्समम् ।
अनेन मर्दयेल्लिङ्गं योनिकर्णस्तनांस्तथा ।
वर्धन्ते मासमात्रेण नात्र कार्या विचारणा ॥ ६९ ॥

'ॐ नमो भगवते उड्डामरेश्वराय सर प्रसर २ कुरु कुरु ठ ठः ।'
अनेन मन्त्रेण सर्वे वर्धनयोगाः सप्ताभिमन्त्रिताः सिद्धा भवन्ति ॥

जाम्बूमार्जारयोः पित्तं यवागूमर्दितं दिहेत् ।
मासैकाद्वर्धते लिङ्गं स्तनौ कर्णौ च मर्दनात् ॥ ७० ॥

'ॐ नमो भगवते डड्डामरेश्वराय सर प्रसर प्रसर निकल निकल निकालय निकालय स्वाहा ठः ठः ॥'

गृहगोधा शुनो जिह्वा स्त्रीजरायुः समं समम् ।
पिष्ट्वा धार्यं ताम्रपात्रे सप्ताहात्तं पुनः पचेत् ॥ ७१ ॥
तिलतैलेन तत्तैलमर्दनाद्वर्धते खलु ।
लिङ्गं स्तनौ च कर्णौ च हस्तौ पादौ न संशयः ॥ ७२ ॥

'ॐ नमो भगवते डड्डामरेश्वराय सर सर हिलि हिलि स्वाहा ठः ठः ॥'

अतितरसुखसाध्यैर्योगराजैः प्रसिद्धैः
सततसुरतयोग्यं स्तम्भनं वर्धनं च ।
निपुणरसिकरामारञ्जकं मोहकं स्या-
द्गदितमिह समस्तं भोगिनां सौख्यहेतुः ॥ ७३ ॥

इति पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरे रसायनखण्डे वीर्यस्तम्भनलिङ्गवर्धनं नाम सप्तमोपदेशः ॥

---

## अथाष्टमोपदेशः ।

श्रीशैले देहसिद्धिः प्रभवति सहसा वृक्षमृत्कन्दतोयै-
स्तच्छास्त्रं शम्भुनोक्तं प्रगहनमखिलं वीक्षितं यत्तु सारम् ।
व्याहृत्यानेकयुक्त्या सकलसुखकरं दृष्टसिद्धं तु यद्य-

तद्वक्ष्ये साधकानामनुभवपथगं भुक्तये मुक्तये च ॥ १ ॥
मल्लिकार्जुनदेवस्य पुरतो गजसन्निभा ।
शिला तिष्ठति या रात्रौ स्रवते गुग्गुलुं सदा ॥ २ ॥
पालाशचाटुना ग्राह्यं क्षिपेदलाबुपात्रके ।
तद्गुग्गुलुसमं गन्धं निष्कैकं भक्षयेत्सदा ॥ ३ ॥
मासान्मृत्युजरां हन्ति जीवेदाचन्द्रतारकम् ।
तद्गुग्गुलुं द्रुते ताम्रे कोटिभागेन योजयेत् ॥ ४ ॥
तद्भवेत्कनकं दिव्यं जाम्बूनदसमप्रभम् ।
वामतो मल्लिनाथस्य घण्टासिद्धेश्वरः स्थितः ॥ ५ ॥
तद्द्वारे विद्यते कुण्डं तत्र घण्टा विलम्बते ।
रात्रौ कृष्णचतुर्दश्यां सोपवासैस्त्रिभिर्जनैः ॥ ६ ॥
कर्तव्यं साधनं तत्र निर्विकल्पैरनिद्रितैः ।
एकस्तु स्नापयेद्देवं जलमेकस्तु वाहयेत् ॥ ७ ॥
एकस्तु वादयेद्घण्टामविच्छिन्नं निशावधि ।
ततस्तुष्टो भवेच्छम्भुः खेचरत्वं प्रयच्छति ॥ ८ ॥
घण्टासिद्धेश्वरस्यैव दक्षिणे क्रोशमात्रके[1] ।
निखनेद् दृश्यते तत्र मृद्गोरोचनसन्निभा ॥ ९ ॥
सिताक्षीरैः पिबेत्कर्षं सप्ताहादमरो भवेत् ।
चन्द्रोदकं प्रसिद्धं वै मल्लिनाथस्य पश्चिमे ॥ १० ॥
स्थितं वैशाखमासे तु पूर्णमास्यां सुसाधयेत् ।
साधको निर्विकल्पेन स्थित्वा तस्य समीपतः ॥ ११ ॥
रात्रौ जपं प्रकुर्वाणस्तत्तोयं चार्धरात्रके ।
स्प्रष्टुं चन्द्रो यदा गच्छेत्तदा क्षिप्रं कराञ्जलिम् ॥ १२ ॥
कृत्वा तिष्ठेद्यदा याति तज्जलं तत्क्षणात्पिबेत् ।
वज्रकायो भवेद्वीरो जीवेदाचन्द्रतारकम् ॥ १३ ॥
श्रीशैलपूर्वद्वारे तु देवोऽस्ति त्रिपुरान्तकः ।
देवस्योत्तरदिग्भागे चिञ्चावृक्षः समीपतः ॥ १४ ॥
विद्यते तस्य मूले तु भैरवो दृश्यते स्वयम् ।

---

१ 'जानुमात्रकम्' ख. ।



तस्याग्रे निखनेद्भूमिं पुरुषस्य प्रमाणतः ॥ १५ ॥
दृश्यते तप्तकुण्डं तु नीलवर्णजलान्वितम् ।
चिञ्चावृक्षस्य पत्राणि सम्यग्वस्त्रेण बन्धयेत् ॥ १६ ॥
तस्मिन् कुण्डे विनिक्षिप्य तानि मीना भवन्ति वै ।
सङ्गृह्य तस्य काष्ठेन पचेत्तेषां विवर्जयेत् ॥ १७ ॥
कण्टकानि शिरः पुच्छं शेषं भक्षेत साधकः ।
क्षणं मूर्च्छा भवेत्तेन प्रबुद्धो जायते स्वयम् ॥ १८ ॥
छिद्रं पश्यति मेदिन्यां जीवेद्वर्षायुतं नरः ।
त्रिपुरान्तकदेवस्य पश्चिमे गव्युतिद्वये ॥ १९ ॥
मणिपल्लिरिति ग्रामस्तस्य पश्चिमतो गिरिः ।
तस्य पश्चिमदिग्भागे कपाटं दृश्यते शुभम् ॥ २० ॥
पूर्वाभिमुखः प्रविशेत्ततो गच्छेच्च दक्षिणम् ।
दशधन्वन्तरं यावद्दृश्यन्ते ज्वलनप्रभाः ॥ २१ ॥
आम्राकाराः सुपाषाणा ग्राह्या वस्त्रेण बन्धयेत् ।
रक्तवर्णं भवेद्वस्त्रं क्षीरमध्ये क्षिपेत्ततः ॥ २२ ॥
तत्क्षीरं जायते रक्तं तत्क्षीरं साधकः पिबेत् ।
सप्ताहाद्वज्रकायः स्याज्जीवेच्चन्द्रार्कतारकम् ॥ २३ ॥
त्रिपुरान्तकदेवस्य उत्तरे कोकिलाबिलम् ।
विख्यातं सर्वलोकेषु कृत्वा वमनरेचनम् ॥ २४ ॥
साधकः प्रविशेत्तत्र दशधन्वन्तरावधि ।
पाषाणाः कोकिलाकारास्तिष्ठन्ति तांस्तु चाहरेत् ॥ २५ ॥
तेषां पृष्ठे तिलाः क्षिप्ताः स्फुटन्त्येव हि तत्क्षणात् ।
इत्येवं प्रत्ययं दृष्ट्वा तांश्च घृष्ट्वा परस्परम् ॥ २६ ॥
क्षीरमध्ये क्षिपेत्तान् वै क्षीरं कृष्णं प्रजायते ।
आकण्ठान्तं पिबेत्तत्तु दिव्यकायो भवेन्नरः ॥ २७ ॥
वलीपलितनिर्मुक्तो जीवेद्ब्रह्मदिनत्रयम् ।
छिद्रं पश्यति मेदिन्यां वायुवेगो महाबलः ॥ २८ ॥
त्रिपुरान्तकदेवस्य पूर्वदिग्योजनान्तरे ।
देवः स्वर्गपुरी नाम विद्यते तत्र वै खनेत् ॥ २९ ॥
देवाग्रे भूमिकां जानुमात्रां तत्र फला इव ।

निर्गच्छन्ति तु पाषाणाः खरस्पर्शा भवन्ति वै ॥ ३० ॥
त्रिपुरान्तकदेवस्य पश्चिमे योजनार्धके ।
विद्यते हि बिलद्वारं तन्मध्ये धनुषां त्रयम् ॥ ३१ ॥
[१]गच्छेत्खर्जूरवृक्षो वै दृश्यते कृष्णवर्णकः ।
तत्फलानां रसं पीत्वा मूर्च्छा सञ्जायते क्षणम् ॥ ३२ ॥
ततः सञ्जायते सिद्धो जीवेच्चन्द्रार्कतारकम् ।
श्रीशैले दक्षिणे द्वारे जालेश्वरसुरेश्वरौ ॥ ३३ ॥
देवौ प्रसिद्धौ विद्येते निखनेत्तत्र भूमिकाम् ।
पाषाणाः श्रीफलाकारा निर्यान्ति स्पर्शभेदकाः ॥ ३४ ॥
देवो रामेश्वरस्तत्र विद्यते तस्य सन्निधौ ।
रुद्राक्षाकारपाषाणाः खरस्पर्शा भवन्ति ते ॥ ३५ ॥
ज्योतिःसिद्धवटे वृक्षे एकपादेन तिष्ठति ।
आवर्तदेवको नाम तत्समीपे तु पश्चिमे ॥ ३६ ॥
विद्यते पर्वतस्तत्र पाषाणास्तालकोपमाः ।
आदाय तान् धमेत्तीव्रं दिव्यं भवति काञ्चनम् ॥ ३७ ॥
तत्रैव दक्षिणद्वारे देवः स्यात्कुण्डलेश्वरः ।
तत्समीपे खनेद्भूमिं जानुमात्रां ततो हरेत् ॥ ३८ ॥
पाषाणाः श्रीफलाकारा रक्ताश्च स्पर्शवेधकाः ।
पुरुषेश्वरदेवस्य कुण्डमस्ति समीपतः ॥ ३९ ॥
गुञ्जा च रिङ्ठकश्चैव द्वौ वृक्षौ तत्र तिष्ठतः ।
तयोः पत्राणि सम्भक्ष्य तत्क्षणादमरो भवेत् ॥ ४० ॥
तथा हस्तिशिला तत्र तस्या दक्षिणतः खनेत् ।
हस्तमात्रं ततः पश्येज्जम्बूफलसमाकृतिः ॥ ४१ ॥
शिला तत्र समाख्याता स्पर्शग्राह्या प्रयत्नतः ।
नाम्ना हस्तिशिरः ख्यातं सैव हस्तिशिला भवेत् ॥ ४२ ॥
तस्या दक्षिणदिग्भागे योजनैकेन तिष्ठति ।
छायाछत्रं प्रसिद्धं तच्छिवरूपं शिवोदितम् ॥ ४३ ॥
शतहस्तप्रमाणं तु तत्क्षेत्रं परिवर्तुलम् ।
योऽसौ गच्छति तस्याधो नासौ केनापि दृश्यते ॥ ४४ ॥

१ 'गच्छेदर्जुनवृक्षो' ख. ।



रुद्रतुल्यो भवेत्सिद्धः क्रीडते भुवनत्रये ।
अथवा साधयेद्दूरात्ख्यातं सिद्ध्यष्टकं तु यत् ॥ ४५ ॥
कान्ताभ्रं काञ्चनं सूतं मर्द्यं क्रमगुणोत्तरम् ।
तद्गोलं वेष्टयेल्लोहैस्त्रिभिर्यत्नात्क्रमेण वै ॥ ४६ ॥
वस्त्रे बद्ध्वा तु तद्वस्त्रं वंशाग्रे बन्धयेद्दृढम् ।
मन्त्रयेत्कालिमन्त्रेण छायाच्छत्रे निवेशयेत् ॥ ४७ ॥
तद्वंशाग्रं क्षणैकेन जायते गुटिका तु ताम् ।
साधको धारयेद्वक्त्रे खेचरत्वप्रदायिकाम् ॥ ४८ ॥
तालकं कुनटीं तद्वद्वंशे बद्ध्वा निवेशयेत् ।
ताभ्यामञ्जितनेत्रो यो निधिं पश्यति भूगतम् ॥ ४९ ॥
वंशे बद्ध्वा क्षिपेत्खड्गं पूर्वमन्त्रेण मन्त्रितम् ।
तत्खड्गं धारयेद्धस्ते त्रैलोक्यविजयी भवेत् ॥ ५० ॥
वस्त्रे गोरोचनं बद्ध्वा वंशस्थं तत्र वेशयेत् ।
तेनैव तिलकं कुर्याद्दृष्ट्वा मोहयते जगत् ॥ ५१ ॥
स्रोतोञ्जनं कज्जलं च क्षिप्त्वा तत्रैव पूर्ववत् ।
तेन चाञ्जितनेत्रो यो देवैरपि न दृश्यते ॥ ५२ ॥
पादुकां तेन योगेन क्षिप्त्वा पद्भ्यां तु धारयेत् ।
यत्रेच्छा तत्र तत्रैव गन्ता भवति तत्क्षणात् ॥ ५३ ॥
तद्वद्रक्तपटं तत्र क्षिप्त्वा संवेष्ट्य साधकः ।
अदृश्यो जायते सम्यक्पटे मुक्ते तु दृश्यते ॥ ५४ ॥
कान्ताभ्रं काञ्चनं सूतं कृत्वा गोलं तु वेशयेत् ।
वंशाग्रस्थं मन्त्रयुक्तं स्पर्शवेधी भवेत्तु तत् ॥ ५५ ॥
श्रीशैले पश्चिमे द्वारे नाम्ना ब्रह्मेश्वरेश्वरः ।
तल्लिङ्गं स्पर्शमित्याहुर्दुर्गा तत्रैव तादृशी ॥ ५६ ॥
नवमं यत्तु सोपानं नद्यां तत्तादृशं स्थितम् ।
देवस्य तिष्ठति द्वारे मुद्गवर्णं विलोकयेत् ॥ ५७ ॥
ब्रह्मेश्वरस्य नैर्ऋत्ये संस्थितं तिन्तिणीवनम् ।
तस्मिन् वने स्थितं कुण्डं तत्र तिष्ठति चण्डिका ॥ ५८ ॥
एकपादेन चिञ्चाधस्तद्वृक्षात्पत्रमाहरेत् ।
बद्ध्वा वस्त्रे क्षिपेत्कुण्डे स्नानं तत्र समाचरेत् ॥ ५९ ॥

स्नानान्ते पोटली ग्राह्या सर्वे मत्स्या भवन्ति ते ।
तत्काष्ठैः पाचयेत्तानि कण्ठं पुच्छं शिरस्त्यजेत् ॥ ६० ॥
भागं देवाय सङ्कल्प्य द्वितीयमतिथेर्भवेत् ।
तृतीयं साधको भुक्त्वा क्षणं भवति मूर्च्छितः ॥ ६१ ॥
तत्क्षणाज्जायते सिद्धश्छिद्रां पश्यति मेदिनीम् ।
अजरामरतां याति न बाध्यस्त्रिदशैरपि ॥ ६२ ॥
अलम्पुरोत्तरे भागे ग्रामः स्याद्भीमपादुकः ।
तस्य ग्रामस्य पार्श्वे तु हस्तमात्रं खनेद्ध्रुवम् ॥ ६३ ॥
पाषाणाः सर्पवद्वक्त्रा ग्राह्या स्पर्शा भवन्ति ते ।
योगेश्वरीति विख्यता देवता या त्वलम्पुरे ॥ ६४ ॥
देव्या ह्यग्रे गुहा रम्या तन्मध्ये निखनेद्ध्रुवम् ।
पाषाणा भेकसङ्काशा ग्राह्या मार्जारविष्ठया ॥ ६५ ॥
मिश्रीकृत्य क्षिपेद्वङ्गे तद्वङ्गं तारतां व्रजेत् ।
मध्वाज्यसहितान् भक्षेत्पाषाणांस्तान्विचक्षणः ॥ ६६ ॥
श्रीशैलस्योत्तरद्वारे महेशो नाम देवता ।
भ्रमराम्रः स्थितस्तत्र तस्य पक्वफलानि वै ॥ ६७ ॥
स्फोटयेत्तत्र निर्यान्ति भ्रमरा जीवसंयुताः ।
इत्येवं प्रत्ययं ज्ञात्वा भ्रमरांस्तान् परित्यजेत् ॥ ६८ ॥
फलानि पाचयेत्क्षीरैः पिबेत्क्षीरं यथेष्टकम् ।
किञ्चिन्मूर्च्छा भवेत्तेन ततो बोधे पिबेत्पुनः ॥ ६९ ॥
एवं कुर्यात्त्रिसप्ताहं वज्रकायो भवेन्नरः ।
वलीपलितनिर्मुक्तो जीवेदाचन्द्रतारकम् ॥ ७० ॥
सर्ववाङ्मयवेत्ता च वायुवेगी भवेन्नरः ।
तेनैवाम्रफलैकेन वर्जितभ्रमरेण च ।
सहस्रपलवङ्गं तु द्रावितं स्तम्भयेद्ध्रुवम् ॥ ७१ ॥
क्षेपात्तारमवाप्नोति सत्यमीश्वरभाषितम् ।
तत्फलं छिद्रितं कृत्वा उत्पाट्य भ्रमरं ततः ॥ ७२ ॥
शुद्धपारदकर्षैकं तत्तुल्यं कृष्णमभ्रकम् ।
क्षिप्त्वा तस्मिन्मुखं रुद्ध्वा लिम्पेन्मृद्गोमयेन च ॥ ७३ ॥



छायाशुष्कं तदाम्रोत्थैः क्वाथैर्यामं त्रिपाचयेत् ।
स्वभावशीतला ग्राह्या गुटिका फलमध्यगा ॥ ७४ ॥
मुखस्था खेचरं दत्ते अदृश्यत्वं महाबला ।
क्वाथे वाक्पतितुल्यः स्याज्जीवेदाचन्द्रतारकम् ॥ ७५ ॥
तारं ताम्रं भुजङ्गं वा कोटिभागेन वेधयेत् ।
कृष्णाभ्रं शुद्धसूतं च पूर्ववत्तत्फले क्षिपेत् ॥ ७६ ॥
लिम्पेन्मृद्गोमयैस्तद्वदारण्योत्पलकैः पुटेत् ।
स्वभावशीतलं ग्राह्यं तद्रसं मधुसर्पिषा ॥ ७७ ॥
गुञ्जामात्रं सदा खादेन्मासाद्बालो भवेन्नरः ।
जीवेद्ब्रह्मदिनं वीरो नवनागबलान्वितः ॥ ७८ ॥
विद्यते लोकविख्यातः पूज्यः पञ्चोपचारकैः ।
ॐ हुं फट्कारमन्त्रेण निर्विकल्पेन साधकैः ॥ ७९ ॥
वीक्ष्य पश्चिमदिग्भागे ह्यन्तरिक्षे च तत्क्षणात् ।
पश्येद्दिव्यविमानानि जायते प्रत्ययो महान् ॥ ८० ॥
ततः पश्चिमदिग्भागे गच्छेन्नदीं तरेत्सुधीः ।
गह्वरं दृश्यते तत्र प्रविशेत्पश्चिमामुखम् ॥ ८१ ॥
योजनत्रितयं गच्छेदेकाकी निर्विकल्पकः ।
पञ्चयोजनविस्तीर्णं दृश्यते कदलीवनम् ॥ ८२ ॥
तस्य मध्येऽतिविस्तीर्णं जलपूर्णं सरोवरम् ।
सिंहासनं तु तन्मध्ये शुद्धस्फटिकसन्निभम् ॥ ८३ ॥
तं दृष्ट्वा दण्डवद्भूमौ निपतेन्मन्त्रमुच्चरेत् ।
ॐ ह्रीं विद्यावागीश्वराधिपतये ह्रीं ॐ स्वाहा ।
स्नानं कृत्वा प्रयत्नेन लक्षमेकं जपेदनु ॥
यथेष्टं भोजनं कृत्वा कन्दमूलफलादिकम् ॥ ८४ ॥
ततः सिंहासनस्योर्ध्वं शुद्धस्फटिकसन्निभः ।
चतुर्भुजस्त्रिनेत्रश्च दृश्यते परमेश्वरः ॥ ८५ ॥
स्तोत्रमन्त्रैर्नमस्कारैः प्रणिपत्य पुनः पुनः ।
वरं दत्ते यथेष्टं वै साधकस्य न संशयः ॥ ८६ ॥
शतमायतनं तत्र कूपानां च शतं नव ।

१ 'क्वाथेयोम' ख. ।

तावत्सङ्ख्यास्तथाऽऽरामा नन्दनाख्यवनानि च ॥ ८७ ॥
तथा नवशतं वाप्यो विद्यन्ते कदलीवने ।
बिलद्वाराणि तावन्ति कल्पवृक्षास्तथैव च ॥ ८८ ॥
तत्रैव मौकली नाम यक्षिणी प्रकटा स्थिता ।
सा वक्ति भोजनं देहि यदीच्छसि समीहितम् ॥ ८९ ॥
ततस्तस्यै प्रवक्तव्यं दास्यामि परमेश्वरि ।
क्षीरान्नं वा फलाहारं तदग्रे दापयेत्सुधीः ॥ ९० ॥
सा वक्ति मम पुत्रोऽयं क्षणं वक्षसि धारय ।
यदा न मुञ्चसे भूमौ तदा सिद्ध्यष्टकं तव ॥ ९१ ॥
दास्येऽहं नात्र संन्देहो भोजनान्तेऽथवा पुनः ।
त्यक्ते करोमि संहारं तस्माद्यत्नेन रक्षय ॥ ९२ ॥
इत्येवं साधको वीरः कुर्यात्सिद्धिमवाप्नुयात् ।
गच्छेदुत्तरदिग्भागे तत्सरो योजनार्धकम् ॥ ९३ ॥
तत्रास्ति पुष्पसंपूर्णं दिव्याख्यं नन्दनं वनम् ।
पुष्पाणां घ्राणमात्रेण क्षुत्पिपासा न विद्यते ॥ ९४ ॥
अथवा भक्षयेत्तस्मात्फलमेकं यथोचितम् ।
तेन भक्षितमात्रेण वज्रकायो भवेन्नरः ॥ ९५ ॥
सरो दक्षिणदिग्भागं गच्छेद्योजनपादकम् ।
तत्र दाडिमसंपूर्णं दृश्यते नन्दनं वनम् ॥ ९६ ॥
तत्फलं भक्षयेत्सिद्धो जीवेद्युगसहस्रकम् ।
तत्सरःपूर्वदिग्भागे गच्छेत्क्रोशार्धमात्रकम् ॥ ९७ ॥
तत्र धात्रीफलैः पूर्णं श्यामलं नन्दनं वनम् ।
फलानि भक्षयेत्तानि जीवेत्कल्पशतत्रयम् ॥ ९८ ॥
तत्सरःपश्चिम भागे गच्छेद्योजनमात्रकम् ।
तत्र बिल्वफलैः पूर्णं दृश्यते नन्दनं वनम् ॥ ९९ ॥
तत्फलं भक्षयेद्वीरो जीवेचन्द्रार्कतारकम् ।
तन्नन्दनवने रम्ये लिङ्गं स्यान्नीलवर्णकम् ॥ १०० ॥
प्रविशेदुत्तरद्वारे तत्र नागो महाबलः ।
उग्रः सप्तफणाकारो दृश्यतेऽतिभयङ्करः ॥ १०१ ॥
तस्य कुर्यान्नमस्कारं हुं[1] हुं कुर्यात्समुद्धरेत् ।

१ 'हुंकारं च समुच्चरेत्' ख. ।



तदाऽसौ वदते वाणीमदृश्यत्वं ददामि ते ॥ १०२ ॥
गच्छ त्वं पश्चिमद्वारे तत्रास्ति दिव्यकन्यका ।
गच्छेत्तत्र महावीरः साधको मन्त्रमुच्चरन् ॥ १०३ ॥
हारं दास्यति सा तुष्टा न प्रवेशं प्रयच्छति ।
तं हारं धारयेत्कण्ठे साक्षाद्वागीश्वरो भवेत् ॥ १०४ ॥
ततस्तु दक्षिणं द्वारं गच्छेत्तत्र भयङ्करम् ।
मुक्तकेशं वक्रनेत्रं गदाहस्तं दिगम्बरम् ॥ १०५ ॥
नीलवर्णं क्षेत्रपालं दृष्ट्वा मन्त्रं समुच्चरेत् ।
ह हा हे हे हं हुंकारं फट् हुं स्वाहान्तमेव च ॥ १०६ ॥
अनेन मन्त्रपाठेन क्षेत्रपालः प्रसीदति ।
ददाति खेचरीं सिद्धिं न प्रवेशं कदाचन ॥ १०७ ॥
ततस्तु पूर्वदिग्भागे द्वारं तत्र गणेश्वरः ।
दृश्यते पूजयेत्तं वै साधकः प्रविशेत्ततः ॥ १०८ ॥
दृश्यते दिव्यचापं तु तथा लिङ्गं मनोहरम् ।
पूजयेच्छिवमन्त्रेण रकारेणैव नान्यथा ॥ १०९ ॥
ततस्तत्र जपं कुर्यादहोरात्रमुपोषितः ।
प्रत्यक्षो जायते रुद्रो वरं दत्ते यथेप्सितम् ॥ ११० ॥
इत्येवमादयः सन्ति सिद्धयः कदलीवने ।
अक्षरैर्लिखितं द्वारे तत्र पद्मावतीबिलम् ॥ १११ ॥
सरसः पूर्वदिग्भागे योजनैकेन तिष्ठति ।
वमनं रेचनं कृत्वा प्रविशेत्तत्र साधकः ॥ ११२ ॥
धन्वन्तरं शतं यावद्गच्छेत्तत्र मृदङ्गकम् ।
दृष्ट्वा तं वादयेद्वीरः सम्यक्पद्मावती ततः ॥ ११३ ॥
आगत्य चामृतं दत्ते यत्पानादमरो भवेत् ।
ततस्तं प्रार्थयत्येव आगच्छ मम मन्दिरम् ॥ ११४ ॥
दिव्यं कन्यापञ्चशतं परिवारेण स्वीकुरु ।
अहं पत्नी भविष्यामि यावद्ब्रह्मा च जीवति ॥ ११५ ॥
तदन्ते परमं स्थानं गच्छामो नात्र संशयः ।
कदम्बेश्वरदेवस्तु आग्नेय्यां दिशि विद्यते ॥ ११६ ॥

१ 'प्रजेशत्वं' ख. ।

तस्य पूर्वतटाकाग्रे स्थितो वृक्षः कदम्बकः ।
तस्य पत्राणि सङ्गृह्य कटुतैलेन लेपयेत् ॥ ११७ ॥
तद्वृक्षबीजतैलैर्वा तत्काष्ठैः पाचयेत्सुधीः ।
मत्स्या भवन्ति ते सर्वे ताम्रपात्रे विनिक्षिपेत् ॥ ११८ ॥
कण्ठपुच्छशिरोवर्जं मध्वाज्याभ्यां तु भक्षयेत् ।
तत्क्षणाज्जायते सिद्धो रुद्रतुल्यो महाबलः ॥ ११९ ॥
नदीस्थाने च यो वृक्षो विद्यते कुण्डलेश्वरे ।
पूर्ववत्क्रमयोगेन सिद्धिः स्यान्नात्र संशयः ॥ १२० ॥
कपोतेश्वरदेवस्योत्तरे पुष्पगिरिः स्थितः ।
तस्य कुर्यात प्रयत्नेन त्रिवारं तु प्रदक्षिणम् ॥ १२१ ॥
ततः शिरः समारुह्य खेचरत्वं लभेन्नरः ।
तत्पूर्वोत्तरदिग्भागे छेलिका[1]द्वारसंस्थितम् ॥ १२२ ॥
उत्तराभिमुखं तत्र प्रविशेद्धनुषां त्रयम् ।
मूषिकाकारपाषाणास्तिष्ठन्ति तान् समाहरेत् ॥ १२३ ॥
तक्रैः पिष्ट्वा तदेकं तु पिबेन्मूर्च्छामवाप्नुयात् ।
क्षणादुत्तिष्ठते सिद्धो जीवेद्ब्रह्मदिनत्रयम् ॥ १२४ ॥
स एव सर्वलोहानां स्पर्शवेधकरो भवेत् ।
अहोरात्रोषितो भूत्वा देवाग्रे सिद्धिमाप्नुयात् ॥ १२५ ॥
कपोतेश्वरदेवस्य दक्षिणे देवताद्वयम् ।
तन्मध्ये कटिमात्रं तु खनेद्गोरोचनोपमाः ॥ १२६ ॥
पाषाणास्तान् समादाय मध्वाज्याभ्यां प्रपेषयेत् ।
तत्पानाज्जायते मर्त्यः कल्पायुर्नात्र संशयः ॥ १२७ ॥
कपोतेश्वरदेवस्य वायव्ये हस्तमात्रकम् ।
खनेत्पारावतप्रख्याः पाषाणाः स्पर्शभेदकाः ॥ १२८ ॥
तिष्ठन्ति ग्राहयेदेकं देवताराधने कृते ।
मल्लिकार्जुनदेवस्य ऐशान्यां भृगुपातनम् ॥ १२९ ॥
विद्यते तत्समीपस्थं कुण्डं तस्मान्मृदाहरेत् ।
पञ्चगव्येन सम्मिश्रां खदिराङ्गारकैर्धमेत् ॥ १३० ॥
नीलोत्पलसमं लोहं पतत्येवाथ सेचयेत् ।

१ 'अम्बिकाद्वारं' ख. ।



मध्वाज्याभ्यां सुतप्तं तत्सप्तवारं पुनः पुनः ॥ १३१ ॥
तद्गोलं धारयेद्वक्त्रे विष्णुतुल्यो भवेन्नरः ।
भृगुपातात् पूर्वभागे क्रोशोदधिकपाटके ॥ १३२ ॥
तस्याग्रे अच्छतैलाख्यः पर्वतो नाम विश्रुतः ।
तत्पश्चिमे बिलद्वारं तन्मध्ये धन्वपञ्चकम् ॥ १३३ ॥
गते तु दृश्यते कुण्डं रसो लाक्षारसप्रभः ।
अलाबुपात्रे संगृह्य कोटिवेधी भवेत्तु सः ॥ १३४ ॥
मल्लिकार्जुनदेवस्य पूर्वतो लोकविश्रुतः ।
प्राकारश्चन्द्रगुप्तस्य विद्यते तत्र मन्दिरम् ॥ १३५ ॥
तस्य पूर्वे स्थितश्चैत्यश्चैत्यपूर्वे महाशिला ।
मुद्गवर्णा च सा ख्याता स्पर्शवेधकरा तु सा ॥ १३६ ॥
गजस्तत्रैव विख्यातस्तमारुह्य समाहितः ।
तस्य पृष्ठात्तृणं ग्राह्यं तत्सर्वं कनकं भवेत् ॥ १३७ ॥
गजस्य चोत्तरे पार्श्वे जानुमात्रं खनेद्भुवम् ।
जम्बूफलसमाकाराः सन्ति ते स्पर्शवेधकाः ॥ १३८ ॥
गजस्याधः खनेद्वाऽथ जानुमात्रं लभेत्ततः ।
त्रिकोणगुटिकां सिद्धां लक्षवेधकरां पराम् ॥ १३९ ॥
श्रीशैलस्य तु वायव्ये तीर्थं देवह्रदः स्थितम् ।
तत्र कुण्डे मुद्गवर्णाः पाषाणाः स्पर्शवेधकाः ॥ १४० ॥
तत्र कूर्मोपमं लिङ्गं स्पर्शवेधकरं परम् ।
कृत्तिकायां सुपूर्णायां कृत्वा पूजां समाहरेत् ॥ १४१ ॥
गव्यूतिद्वयतस्तस्मान्नाम्ना नीलवनं स्मृतम् ।
तत्र लिङ्गं नीलवर्णं जलं चैव तु तादृशम् ॥ १४२ ॥
अश्वाभ्रकाकसदृशाः पाषाणाः स्पर्शवेधकाः ।
सन्ति देवगृहस्यान्तः खनेज्जान्वन्तराद्धरेत् ॥ १४३ ॥
श्रीशैलस्य तु नैर्ऋत्ये नाम्ना गुण्डिप्रभा स्थिता ।
तस्याग्राद्गर्तमृद्ग्राह्या पीतवर्णा पुटैर्दहेत् ॥ १४४ ॥
तस्मान्निःसरते हेम स्फुरद्रूपं न संशयः ।
तत्रैव भ्रमराः स्युश्च पूर्ववत्फलदायकाः ॥ १४५ ॥

तथा तम्बीपुरे नाम्नि तीर्थे च विपुले शुभम् ।
सदाफलं तु विख्यातं पूर्ववत्साधयेत्सुधीः ॥ १४६ ॥
महानन्देश्वरं नाम श्रीशैलस्य तु नैर्ऋते ।
तस्य पूर्वोत्तरे पार्श्वे गच्छेद्राजपथेन तु ॥ १४७ ॥
कालवर्णेश्वरो नाम देवस्तस्याग्रकुण्डकम् ।
इन्द्रगोपकसङ्काशस्तन्मध्ये विद्यते रसः ॥ १४८ ॥
तप्तानि सप्तलोहानि तत्सेकात्काञ्चनं भवेत् ।
श्रीशैलस्य तु ईशाने देवः स्यात्तु रत्नेश्वरः ॥ १४९ ॥
तस्योत्तरे सुविख्यात उमापर्वत उत्तमः ।
तस्य मूर्ध्नि त्रिशूलाभा दर्भास्तिष्ठन्ति शोभनाः ॥ १५० ॥
तस्याधः कटिमात्रं तु खात्वा नीलां मृदं हरेत् ।
तां पचेदक्षजैः काष्ठैर्भागं देवाय कल्पयेत् ॥ १५१ ॥
अतिथेश्च तथाऽग्नेश्च भागं भागं प्रकल्पयेत् ।
भागमात्मनि भुञ्जीत जीवेत्कल्पायुतं नरः ॥ १५२ ॥
तत्र कोटीश्वरं ख्यातमिलेश्वरसमीपतः ।
तस्याग्रे पुष्पमात्रं तु स्पर्शवेधकरं भवेत् ॥ १५३ ॥
अचलेशश्च तत्रैव स्पर्शवेधकरः परः ।
दक्षिणे अचलेशस्य योजनैकेन विद्यते ॥ १५४ ॥
अमरेश्वरदेवाख्यस्तत्र स्वर्णशिला शुभा ।
तस्य पृष्ठे च गोमांसं महामांसं च वा क्षिपेत् ॥ १५५ ॥
प्रज्वाल्य बदरीकाष्ठैः प्रातः स्वर्णोपमा तु सा ।
दृश्यते रजसा स्त्रीणां भावितं वस्त्रखण्डकम् ॥ १५६ ॥
तच्छिलालोडितं कुर्याद्रक्षेदलाबुपात्रके ।
तेन संस्पर्शमात्रेण लोहं भवति हाटकम् ॥ १५७ ॥
श्रीशैले तत्र तत्रैव पाषाणा पिण्डभूस्थिताः ।
तच्चूर्णं त्रिफलासार्धं कर्षैकं भक्षयेत्सदा ॥ १५८ ॥
मासार्धं तु जरां हन्ति जीवेदाचन्द्रतारकम् ।
नैर्ऋत्ये शैलराजस्य पटाहकर्ण ईश्वरः ॥ १५९ ॥
तस्य चेशानदिग्भागे पञ्चविंशतिधन्वके ।
द्विहस्तमात्रोर्ध्वशिला तत्र हस्तद्वयं खनेत् ॥ १६० ॥



श्रावसम्पुटसङ्काशान् पाषाणांस्त्रिशदाहरेत् ।
कृत्वा तानग्निवर्णांश्च सिञ्चेत्कूष्माण्डजैर्द्रवैः ॥ १६१ ॥
तन्मध्यान्नवनीतं तु गृह्यादेवाय भागकम् ।
अतिथेर्भागमेकं तु भागैकं भक्षयेद्बुधः ॥ १६२ ॥
मूर्च्छा भवेद्दिवारात्रं प्रबुद्धो जायते नरः ।
जीवेद्वर्षायुतं वीरो वलीपलितवर्जितः ॥ १६३ ॥
तस्य देवस्य सोपानं द्वितीयं स्पर्शवेधकम् ।
तस्य देवस्य पार्श्वे तु पाषाणाः श्वेतपीतकाः ॥ १६४ ॥
सर्वस्पर्शा न सन्देह एकमेव समाहरेत् ।
तस्य देवस्य पूर्वे तु कूपः स्यान्नातिदूरतः ॥ १६५ ॥
तन्मध्ये भेकसङ्काशाः पाषाणाः स्पर्शवेधकाः ।
उत्तरे तस्य देवस्य विख्यातो लिङ्गपर्वतः ॥ १६६ ॥
तस्य चोत्तरपार्श्वे तु नदी स्यात्पूर्ववाहिनी ।
नद्याः पश्चिमदिग्भागे लिङ्गं पिङ्गलवर्णकम् ॥ १६७ ॥
तत्र शैलोदकैः कुण्डं पूर्णं स्यात्क्षणवेधकम् ।
महेशाद्दक्षिणे भागे चण्डिका योजनद्वये ॥ १६८ ॥
पिण्डादेवीति विख्याता तस्या वायव्यकोणतः ।
कूपस्तिष्ठति तन्मध्ये पाषाणा मुद्गवर्णकाः ॥ १६९ ॥
तथा पथ्यानिभाश्चैव सर्वे ते स्पर्शवेधकाः ।
स्पर्शनादत्र सर्वेषां वेधयुक्तिर्विधीयते ॥ १७० ॥
स्थूलश्चेत्पेषयेच्छ्लक्ष्णं तेन मूषां तु कारयेत् ।
अष्टलोहानि तन्मध्ये समावर्त्यानि कारयेत् ॥ १७१ ॥
तत्सर्वं जायते स्वर्णमेवं कुर्याद्यथेप्सितम् ।
सूक्ष्मश्चेदष्टलोहानां द्रुतानां यत्र कुत्रचित् ॥ १७२ ॥
तं सर्वं निक्षिपेन्मध्ये सर्वं तत्काञ्चनं भवेत् ।
मल्लिकार्जुनवायव्ये तीर्थं सर्वेश्वरं स्थितम् ॥ १७३ ॥
तस्य दक्षिणदिग्भागे जलमार्गेऽर्धयोजने ।
गते डाङ्गरिकं तत्र दृश्यते तस्य मूर्धनि ॥ १७४ ॥
धात्रीफलानि कृष्णानि विद्यन्ते तानि भक्षयेत् ।
यथेष्टानि तु सप्ताहं वज्रकायो भवेन्नरः ॥ १७५ ॥

बलीपलितनिर्मुक्तो जीवेत्कल्पशतत्रयम् ।
तस्माच्च दक्षिणे भागे काकलेरीमहानवम् ॥ १७६ ॥
तत्रास्ति स्तम्भकदली प्रविशेत्तत्र साधकः ।
गच्छेत्क्रोशार्धमात्रं तु दृश्यते रसकुण्डकम् ॥ १७७ ॥
गृहीत्वाऽलाबुपात्रे तु कोटिवेधी भवेद्रसः ।
तस्मिन् वने मयूरःस्यान्नीलवर्णशिलामयः ॥ १७८ ॥
मुखाग्रे तस्य कुण्डं तु द्वादशाङ्गुलनीलकम् ।
तन्मध्ये शुष्कवंशं तु क्षिप्त्वा स्यान्नूतनः क्षणात् ॥ १७९ ॥
दिने पत्रं फलं पुष्पं जायते तस्य नान्यथा ।
तत्र पारदप्रस्थैकं क्षिप्त्वा तावज्जलं हरेत् ॥ १८० ॥
क्षौद्रतुल्यं पिबेत्तं वै तत्क्षणान्मूर्च्छितो भवेत् ।
मुहूर्ताल्लब्धराज्यःस्याज्जीवेद्युगसहस्रकम् ॥ १८१ ॥
शैलस्याग्नेयभागे तु गुटिकासिद्धकेश्वरः ।
विद्यते तस्य पुरतः पञ्चहस्तां खनेद्भुवम् ॥ १८२ ॥
पाषाणा बदराकाराः सन्ति खेगतिदायकाः ।
एकमेव समाहृत्य वक्त्रे धार्यः खगामिभिः ॥ १८३ ॥
श्रीशैले सर्वयोगानामुक्तानां विधिरुच्यते ।
मन्त्रन्यासं पुरा कृत्वा पश्चाल्लक्षं जपेदनु ॥ १८४ ॥
अघोरं तेन वै शीघ्रं तत्तत्सिद्धिमवाप्नुयात् ।
क्षेत्रदेवतामावाहयेत् । तत्र स्वप्ने देवता प्रत्यक्षीभूय वरं ददाति ।
एवं मन्त्रपरैः सुनिश्चलतरैर्भक्तैश्च तत्साधकैः
शम्भोः पूजनतत्परैः प्रतिदिनं पूजाविधेः पालकैः ।
कार्यं श्रीगिरिसाधनं जपपरैराम्नायपारङ्गतै-
र्नो चेत्क्लेशकरं पराकृतमहो व्यर्थं भवेन्निश्चितम् ॥ १८५ ॥

इति श्रीपार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरे रसायनखण्डे
श्रीपर्वतसाधनं नामाष्टमोपदेशः ॥

समाप्तोऽयं रसायनखण्डः ।

---

१ श्रीशैलपर्वतस्तु दक्षिणभारते कर्णाटकदेशे वर्तते ।

प्रकाशित हो गया ]　　सचित्र—　　[ प्रकाशित हो गया

# रसेन्द्रसारसंग्रह–

## 'रसचन्द्रिका' भाषा टीका परिशिष्ट सहित ।

परमात्मा की असीम कृपा से आयुर्वेद तथा डाक्टरी में परम निष्णात **आयुर्वेदाचार्य पं० प्रयागदत्त जोशी जी** विरचित **रसेन्द्रसारसंग्रह** नवीन सरल वैज्ञानिक ढंग की **रसचन्द्रिका** नामक हिन्दी टीका के साथ प्रकाशित हो गया । यह रसचन्द्रिका टीका आज कल की सभी प्रकाशित हिन्दी टीका से सुविस्तृत सरल हुई है । सभी कठिन स्थलों पर टिप्पणीयां दी गई हैं । मत-मतान्तरोंका उल्लेख व सभी स्थलों पर आधुनिक काल के अनुसार उपयुक्त **मात्रायें** भी दी गई हैं । इसी भांति **वक्तव्य**-में प्रत्येक प्रयोगों की विशेषता का सुन्दर विवेचन भी किया गया है ।

**परिशिष्ट** में नवीन रोगों पर रसों का प्रयोग, मानपरिभाषा, मूषा तथा पुट प्रकरण, अनुपान विधि तथा औषध बनाने के नियम आदि भी देकर टीकाकार ने इस ग्रन्थ को एक संपूर्ण रस ग्रन्थ ही बना दिया है । यन्त्रों के चित्र वर्णन सहित देकर स्पष्ट कर दिये गये हैं । रसचन्द्रिका टीका से इस ग्रन्थ को साधारण अल्पज्ञ भी विना गुरु के समझ सक्ता है । अधिक क्या ग्रन्थ को देखते ही आप मुग्ध हो जांयगे । गुटका संस्करण सुन्दर मनोहर कपड़े की जिल्द होते हुए सभी संस्करणों से कम लागत मात्र मुल्य भी २)

विद्यार्थियों के लिये केवल १॥=) मात्र है ।

---